

श्रीविश्वनाथपञ्चाननभट्टाचार्येण निर्मितायाः

सिद्धान्तमुक्तावल्याः

प्रत्यक्षशब्दखण्डयोर्व्याख्यानभूतः प्रश्नोत्तररूपो

# मुक्तावलीप्रकाशः



श्री पं. नारायणदत्तशर्मत्रिपाठिना

विरचितः

श्रीविश्वनाथपञ्चाननभट्टाचार्येणनिर्मितायाः

# सिद्धान्तमुक्तावल्याः

प्रत्यक्षशब्दखण्डयोर्व्याख्यानभूतःप्रश्नोत्तररूपो—

# मुक्तावलीप्रकाशः

गाज़ीपुरमण्डलान्तर्गत (खढ़िया) ऽभिजनेन
काशीस्थश्रीचन्द्रमहाविद्यालयप्रधानाध्यापकेन।
व्या० आ० पो० आ० का० तीर्थेन—
नारायणदत्तशर्मत्रिपाठिना
विरचित स्तेनैव स्वायत्तीकृतश्च।



गाज़ीपुरमण्डलान्तर्गत—
जखनियांपत्रालयक रामपुर वलभद्रग्रामनिवासि—
पं० गिरिजाप्रसादशर्मपाण्डेयेन
प्रकाशितः—

बी. के. शास्त्री द्वारा—
ज्योतिष प्रकाश यन्त्रालय, विश्वेश्वरगञ्ज, काशी इत्यत्र मुद्रितः।

वि० सं० १९८९

प्रथमं संस्करणम् ] [ मूल्यम् ॥/)

*Adarsha Sanskrit Grantha Mala Series 2*

# MUKTAWALI PRAKASHA PRASHNOTTAR RUPA.

BY

PT. Narayan dutta tripathi.

*Vyakaruna & Postacharya,*
*Kavyatirtha.*

HEAD PANDIT SHRI CHANDRA
MAHA VIDYALAYA, BENARES.

---

*Published by*
Pt. Girija Prasad Sharma, Pandeya.

RAMPUR BALBHADRA,
P. O. JAKHANIAN, Ghazipur.

---

*Printed by*
B. K. Shastri.
AT THE JYOTISH PRAKASH PRESS,
BISESARGANJ, BENARES CITY.



1932.

# प्रकाशकस्य निवेदनम् ।

प्रायो विदितचरमेव विदुषां यदिदं न्यायशास्त्रं सर्वेषामुपकारकम् । अतएव कणादं पाणिनीयं च सर्वशास्त्रोपकारकमिति प्राचीना किंवदन्ती सर्वत्र प्रचलिता । तत्रापि न्यायवैशेषिकयोर्द्वयोरपि सामान्यरूपेण पदार्थप्रतिपादिकेयं सिद्धान्तमुक्तावली मुक्तावलीव आकर्षन्ति चेतांसि विज्ञानाम् । अतएवेयं काशिकराजकीयसंस्कृतपरीक्षाध्यक्षैः काशीस्थहिन्दूविश्वविद्यालयीय प्राच्यविभागाध्यक्षैश्च ज्योतिषवर्जं प्रायस्सर्वासु मध्यमपरीक्षासु पाठ्यत्वेन स्वीकृताऽस्ति । अतिदुरवगाह पदार्था चेयं न सर्वेषां बुद्धिपथमारोहति । यथाकथंचिदारूढापि मध्यमपरीक्षां दित्सुभि राधुनिकै श्छात्रैः न सम्यग् स्वीय भाषया प्रकाशयितुं पार्यते । केचित्वस्याः मूलमात्रमभ्यस्य परीक्षा सागरोत्तरणाय यतन्ते, परन्तु परीक्षाकाले 'केवलं टीकानुपूर्वीलेखे अङ्कलाभो न भवेदिति परीक्षकप्रवराणां प्रश्नपत्राङ्कितां आज्ञामवलोक्य वज्राहता इव लेखितुमसमर्था किंकर्तव्यविमूढा भवन्ति । तेषां परीक्षासागरतितीर्षूणां छात्राणामुपकाराय अयं मुक्तावली प्रकाशो मया प्रकाशं नीतः । यदि चात्र मनुष्यस्वभावसिद्धाः मदीयाज्ञानदोषजा वा अशुद्धयः क्वापि संभवेयुः तर्हि 'गच्छतस्खलनं क्वापि भवत्येव प्रमादतः' इतिन्यायमुररीकृत्य समाधेया विद्वद्भिः । यदि चानेन अल्पोऽप्युपकारो भवेत् विदुषां तदा मन्येऽहं कृतकृत्यं स्वीय परिश्रममिति ।

ग्राम—रामपुर बलभद्र
पो० आ० जखनियां
जि० ग़ाज़ीपुर
विजयादशमी सं. १९८९

विदुषामनुचरः
गिरिजाप्रसादशर्मपाण्डेयः

॥ श्रीः ॥

# निवेदनपुष्पाञ्जलिरयं विद्वद्वृन्देषु ।

विज्ञातमेव विश्वेषां सहृदयानां यच्छास्त्रमेव निरवद्यं हृद्यं समुपास्यं विबुधवृन्दानाम् । यदुपासनया च वाग्देवता राजहंसी विशुद्धमानसं सूक्तिमौक्तिकप्रकरपरिवारितं विनिद्रभावारविन्दं विमलजीवन मलङ्करोति । यद्यपिसर्वमेव शास्त्रं सद्यः सेव्यमान मुपकारकं तथापि तत्रापि प्रसिद्धासु चतसृषु विद्यासु आन्वीक्षिक्येव सङ्कलनायां प्रथमं पद माद्धाति द्रव्यादिपदार्थव्रजस्य सर्वत्र विद्यमानत्वा त्तदीयतत्त्वज्ञानस्यसर्वत्रोपकारकत्वाच्च । अतएव पुरातनविबुधकल्पैर्विबुधकदम्बैः प्रधानकाशिकराजकीयपरीक्षायां व्याकरणादिष्वपि विषयेषु मध्यमपरीक्षायां प्रदीपइव न्यायसिद्धान्तप्रकाशकः सिद्धान्तमुक्तावलीप्रत्यक्षादिभागोनियोजितोऽधुनापि तत्र वर्त्ततएव । तज्ज्ञानस्याऽतीवोपयोगित्वेऽपि सहसा प्रवर्त्तमानो वैयाकरणादिश्छात्रो झटिति ज्ञातुमशक्तः शास्त्रतत्त्वस्य दुरवगाहत्वात् । अतोजगत्पूज्यैर्गुरुप्रवरैः काशीनाथशर्म्माभिधैर्मदेकहृदयेन व्या.आ.पं. कैलासपतिमिश्रेणाधिकतरैं स्वशिष्यवर्गैश्च दत्तोत्साहोऽहंसिद्धान्तमुक्तावलीव्याख्यानात्मनःप्रश्नोत्तररूपमुक्तावली प्रकाशस्य प्रकाशाय प्रवृत्तः । यद्ययं लघुमतिप्रकटितः प्रकाश श्छात्राणां कदाचित्किञ्चिदुपकारं तनुयात्तर्हि तेन कृतकृत्यो भवेयम् । यद्यप्येष प्रकाशोविशालबुद्धीनां दिनकरोक्तिरसाभिज्ञानां रुद्ररामरुद्रोक्तिसहिष्णूनां बुधानां मुदे नालम्,तथापि बालानां छात्राणां कदाचि त्तस्यै प्रभवेदिति मेप्रवृत्तिः । अत्र च भागद्वय न्तत्राद्यः प्रत्यक्षखण्डात्मको द्वितीय श्शब्दखण्डात्मकस्तयोः प्रकाशने गुर्जरदेशीयौ चन्द्रशङ्करनारायणदत्तशर्म्माणौ सरयूपारीणश्शेषबलिशर्म्माच विपुलं साहाय्यंदत्तवन्तस्तेपिधन्यवादार्हा अन्येऽपि यथावसरं साहाय्यं दत्तवन्त स्तेऽपितथार्हाः । अत्रच स्वकीयाज्ञानेन,दृष्टिदोषेण, लिपिमेलनदोषेणच याकाचित्त्रुटिः सा क्षन्तव्येति ।

प्रार्थयते विदुषामनुचरो नारायणदत्तशर्मत्रिपाठी ।

# ग्रन्थ विषये विदुषां सम्मतिः ।

॥ श्रीः ॥

श्री पं० नारायणदत्तत्रिपाठिना विरचितं मुक्तावलीप्रकाश मव-लोक्य नितरां प्रमोदते मदीयं चेतः। काशिकराजकीय साहित्यव्याकरण मध्यमपरीक्षानियतयो र्मुक्तावलीभागयोः पदार्थानां छात्राणा' मुप-योगदृष्ट्या प्रश्नोत्तररूपेण सुस्पष्टसरलरीत्या च स्वातन्त्र्येणैव प्रति पादनपरो हि एषग्रन्थः परीक्षार्थिना मर्थाववोधनिरपेक्षया ग्रन्थान्तराणा मेव स्मरणस्य कुप्रवृत्तिं निराकुर्वन्, ग्रन्थप्रतिपाद्यविषयाणां वस्तुतोऽव गमने च रुचि मुत्पादयन्, तेषां महान्तमुपकारं करिष्यतीतिमन्यते ।

सरस्वतीभवनम्
३० । ६ । ३२

डाक्टर श्रीमङ्गलदेव शास्त्री,
एम. ए. डी. फिल (ऑक्सफोर्ड)
रजिट्रार ।
गवर्नमेंट संस्कृत परीक्षा, बनारस ।

* श्रीः *

अतिदुरूहन्यायमुक्तावलीभावार्थाधिगमे क्लिश्यतां दिनकरी रामरुद्रीप्रभृतिकर्कश निबन्धानधिकारिणां व्याकरणसाहित्यखण्ड मध्यमपरीक्षांदित्सूनां छात्राणां कृतेऽन्येषा ञ्ज्ञानायासेनैव मुक्तावल्यर्थं बुभुत्सूनां प्रहर्षाय किमप्यावेद्य नै तदवितथ मिति बुद्ध्या कर्णौ कुरुत ॥

अस्ति प्रश्नोत्तररूपो मुक्तावलीप्रकाशः श्री पं० नारायण-दत्ता परनामधेयनृसिंहदत्तशर्मप्रणीतो विशुद्धतयाऽनुद्वेजकतया च लौकिकं मुक्तावलीप्रकाश मतिशयानः कारिकावलीमुक्तावल्योरक्षराणि स्वरूपतोऽनालम्ब्य प्रवृत्तत्वेऽपि तद्भावार्थावबोधनपरस्समुदितार्थप्रकाशकः। एतस्मिन्हि ग्रन्थकर्त्रा कारिकावलीमुक्तावल्योः पङ्क्तयो न व्याख्याताः तथाव्याख्याने छात्राणांतत्रत्यपङ्क्त्यर्थावबोधेन बुद्धिविच्छेदे संसृष्टार्थस्यानवधार्यत्वप्रसङ्गात्। किञ्चसरलया सरण्यासर्वेभावाः समुद्भासिता इति नव्यो मार्गः। एनञ्च कीरवदधिसमभ्यस्य सुदुस्तरां परीक्षां नदीं नून मुत्तरेयु रन्तेवासिन इति दृढो मेऽध्यवसायः यतोस्मिन् परीक्षालेखौपयिकप्रकारेणैव पदार्थाः प्रतिपादिता इति ॥

भाद्रशुक्ला त्रयोदशी। १९८९ वि.
दु॰ कालिका प्रतोली।

प्रबोधयति काशीवासी
काशीनाथपण्डितः
काशीस्थराजकीय संस्कृतपाठशालाध्यापको
देवनारायणत्रिवेद्यपि

॥ श्रीः ॥

# विषयानुक्रमः !

पृ. सं०　　विषयाः



इतिप्रत्यक्षखण्डसूचीपत्रम्

---

# अथ शब्दखण्ड विषयानुक्रमः

| पृष्ठ सं. | विषयाः |
|---|---|
| १ | शाब्दबोध प्रकार निरूपणम् |
| ३ | शक्ति ग्राहकाणां सोदाहरण प्रदर्शनम् |
| ६ | जात्यादि शक्ति वाद खण्डनम् |
| ७ | शक्त पदभेद कथनम् |
| ८ | लक्षण स्वरूप निरूपणम् |
| १२ | शाब्दबोधे सोदाहरण कारण प्रकथनम् |
| १५ | शाब्दबोधे योग्यता ज्ञानस्य हेतु निरूपणम् |
| १६ | शाब्दबोधे आकांक्षाज्ञान निरूपणम् |
| १७ | शाब्दबोधे तात्पर्यज्ञानं कारण निरूपणम् |

इति शब्दखण्ड विषयानुक्रमः ।

॥ श्रीगणेशायनमः ॥

# मुक्तावलीप्रकाशः



## प्रश्नोत्तररूपः

काशीनाथं विश्वनाथं हरिनारायणं हरिम् ।
वन्दे विशुद्धविज्ञानौ गुरूद्वौ शास्त्रपारगौ- ॥
विश्वेशंसच्चिदानन्दं जगत्कारणमव्ययम्- ।
नत्वा मुक्तावलीव्याख्या प्रकाशः क्रियते मया ॥

### ( १ ) मङ्गलविषयेऽर्वाचीनप्राचीनयोः कोमतभेदः ?

अथ कारिकावल्यां नूतनेत्यादिना भगवत्कृष्णनमस्काररूपं मंङ्गलमाचरितम्, तन्न युक्तम्, तस्य निष्फलत्वात्, न कुर्यान्निष्फलंकर्मेत्यभियुक्तोक्त्या निष्फलानुष्ठानस्यनिषिध्यमानत्वात्, नच समाप्तिरेव तत्फलमिति वाच्यम्, कार्यकारणभावनियामकान्वयव्यतिरेकव्यभिचारात्—तथाहि तत्सत्वे तदितरयावत्कारणसत्वेतत्सत्वमन्वयः, तदभावे तदभावोव्यतिरेक इत्यनयोराकारः, तौच दंडघटयोर्दृष्टौ, नतु मंगलसमाप्त्योः, कादम्बर्यादौ मङ्गलकलापसत्वेऽपि समाप्त्यभावात्-किरणावल्यादौ तदभावेऽपि तद्दर्शनात्—तथाच मंगलं फलसामान्याभाववत् फलविशेषशून्यत्वात्, पारिमाण्डल्यवत्—अतएव मङ्गलं कर्तव्यताऽभाववत् फलसामान्यशून्यत्वात् निष्प्रयोजनजलताडनवत्, इति चेन्न, मंगलंसफलम्, अविगीतशिष्टाचार विषयत्वात्, दर्शपौर्णमासादिवत्—इत्यनुमानेन तस्य फलवत्वसिद्धेः, श्येनयागादौ व्यभिचारवारणाय अविगीतेति, फलसाधनतांशे भ्रमरहितत्वं शिष्टत्वम्—तेन व्युत्क्रमकृतदर्शादेर्निष्फलत्वेऽपि न व्यभिचारः, नन्वेवं

सामान्यतस्तस्य फलवत्त्वसिद्धावपि विशेषतः समाप्तिरेव तत्फलमिति कथं लभ्यते गङ्गास्नानादिवददृष्टार्थकतैव किन्न स्यादिति चेन्न, दृष्टासम्भवे एव तत्कल्पनात् । ननु तर्हि विश्वजिन्न्यायात् स्वर्ग एवेष्टं कल्प्यतामिति चेन्न, तदनुपस्थितत्वात्–समाप्तिफलस्योपस्थितत्वाच्च, एवञ्च परिशेषानुमानेन सा तत्फलमिति कल्प्यते, अत्रायं प्रयोगः मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वेसति सफलत्वात्–यद्यदन्याफलकत्वे सति सफलं तत्तत्फलकम्, यथा घटस्य जलाहरणादिकं तथा चेदम्–तस्मात्तथा, नन्वेवमसत्यपि मङ्गले नास्तिकग्रन्थस्य समाप्तिदर्शनेन व्यतिरेकव्यभिचार इति चेन्न, तास्प्रति तस्य कारणत्वनिर्णये तत्रापि जन्मान्तरीयतत्कल्पनात्—नचैवं कादम्बर्यादावन्वयव्यभिचारज्ञानम्–तज्जनकताग्रहविरोधिस्यादेवेति वाच्यम्– " सति विरोधे बलवता दुर्बलो बाध्यते " इति न्यायेन मङ्गलापेक्षया विघ्नस्यप्राबल्यात्, तदपेक्षया तेषामाधिक्याच्च, ननु तथापि तत्र विघ्नध्वंसोमाभूत् तव समाप्तौ मङ्गलस्य कारणत्वेन तत्सत्वात् सा किमितिनेति चेन्न, यागेन स्वर्गे साध्येऽपूर्व इव विघ्नध्वंसस्य तद्व्यापारत्वेन तदभावेन तस्याअभावात्—अथैवं मङ्गलस्य स्मृतिरूपत्वेन समवायेनात्मनिष्ठत्वात् समाप्तेश्च चरमवर्णध्वंसरूपाया आकाशनिष्ठत्वाद् वैयधिकरण्येन कथंकारं तयोः कार्यकारणभाव इति चेन्न, स्वप्रतियोगिचरमवर्णानुकूल कृतिमत्त्वसम्बन्धेन समाप्तिंप्रति तस्यकारणत्वस्वीकारेणादोषादिति प्राचीनमतम् ।

अथ विघ्नध्वंसस्य तद्व्यापारं वदतः प्राचीनमतेऽपि तस्य मङ्गलकार्यत्वमापतितम्, व्यापारस्य तज्जन्यत्वे सति तज्जन्यजनकत्वरूपत्वात्, विघ्नोमे निवर्ततामिति कामनया तत्र प्रवृत्तेश्च विघ्नध्वंस एव तत्फलम्– नन्वेवं तर्हि समाप्ति र्नियतकारणानियम्येतिचेन्न । बुद्धिप्रतिभादेस्तत्कारणत्वात्, ननुध्वंसंप्रति प्रतियोगिनःकारणत्वाद्, विघ्नात्यन्ताभाववत् पुरुषेण कृते मङ्गले व्यभिचारस्तत्र विघ्नस्यैवाभावादिति चेन्न, तत्कृत मङ्गले निष्फलत्वस्यैवेष्टत्वात्–नच तस्य निष्फलत्वे प्रवृत्तिरेव कथमिति

वाच्यम् । तदाशङ्क्यैव तदाचरणात् । ननु प्रवृत्तिं प्रति निश्चयात्मक ज्ञानस्य कारणत्वेन सैवानुपपन्नेतिचेन्न, मङ्गलप्रवृत्तौ तज्ज्ञानमात्रस्य प्रवर्त्तकत्वात्, यद्यपि विघ्नसंदेहे तदाचरणमयुक्तं तथाप्यत्र तादृशशिष्टाचारेण तत्रप्रवृत्तिः, ननु निर्विघ्नपुरुषाचरितमङ्गलेऽन्वयव्यभिचारेण तद्ध्वंसं प्रति तस्य कारणताबाधितत्वे बाधितार्थबोधकत्वेन "विघ्नध्वंस कामो मङ्गलमाचरे"दिति वेदस्याप्रामाण्यापत्तिरिति चेन्न, सति विघ्ने तद्ध्वंसस्य तद्बोधितत्वेन प्रतियोगिरूपकारणाभावेन दुरितध्वंसरूपकार्यानुपपत्या तस्याप्रामाण्याभावात्, ध्वंसंप्रतिप्रतियोगिनःकारणत्वादेव पापभ्रान्त्याऽनुष्ठितप्रायश्चित्तस्य वैफल्येऽपि नतद्बोधकवेदाप्रामाण्यम् नच विघ्नध्वंसत्वावच्छिन्नं प्रति न मङ्गलस्यकारणता "सर्वे विघ्ना शमं यान्ति गणेशस्तव पाठतः" इत्यादिना तत्पाठस्यापि तद्ध्वंसजनकत्वबोधनात् प्रायश्चित्तभोगादिनातद्ध्वंसेव्यभिचाराच्चेति साम्प्रतम्, मङ्गलस्य स्वाव्यवहितोत्तर क्षणोत्पत्तिकत्व सम्बन्धेन मङ्गल विशिष्टविघ्नध्वंसत्वस्य कार्यतावच्छेदकत्वेनादोषात्—ननुयदिमङ्गलस्यविघ्नध्वंसएव फलं तर्हि समाप्तिकामस्य तत्र प्रवृत्ति र्न स्यादतः समाप्तिसाधनविघ्नध्वंससाधनत्वात्तत्र प्रवृत्तिर्वाच्या तदेवन सम्भवति विघ्नात्यन्ताभावस्थले व्यभिचारेण तद्ध्वंसस्य समाप्तिसाधनत्वाभावादिति चेन्न, तत्र विघ्नात्यन्ताभावस्यैव समाप्तिं प्रति कारणत्वात् । न चैवमननुगम इति वाच्यम्—विघ्नसंसर्गाभावत्वस्यानुगमकस्यसत्वात् । ननु तथापि मङ्गलमन्तरेण समाप्तौ विघ्नध्वंसाभाववतिसमाप्तेर्दर्शनाद्व्यतिरेकव्यभिचार इति चेन्न, नास्तिकादिग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसकल्पनेनाव्यभिचारात् । ननूभयकल्पने गौरवमिति चेत्तत्रापि विघ्नात्यन्ताभावत्वेनैव समाप्तिकल्पने गौरवाभावात्—इति नव्याः ।

## (२) ईश्वरसिद्धि प्रकारं दर्शय ?

ननु मूले "तस्मै कृष्णाय नम" इत्यनेन कृष्णस्य नमस्कार्यत्वमुक्तम् तच्चायुक्तम् तत्रैव प्रमाणाभावात् । न च तत्र प्रत्यक्षंप्रमाणमितिवाच्यम्

"रूपमत्रापि कारणं द्रव्याध्यक्षे" इतिवक्ष्यमाणप्रकारेणेश्वरस्यारूपि द्रव्यत्वेन चाक्षुषस्पार्शनप्रत्यक्षयोरभावात्। भवन्मते तस्य द्रव्यत्वेन शब्द गन्धरसग्राहकाणां श्रोत्रघ्राणरसनेन्द्रियाणां तत्राप्रसक्तेश्च, एवं तत्र वाह्येन्द्रियाणांप्रमाणत्वाभावः। नापि मानसं तत्प्रत्यक्षं नैयायिकनये सर्वात्मनां विभुत्वेन सर्वात्मनः संयोगस्य सत्त्वात् सर्वेषां सर्वज्ञत्वापत्त्या विलक्षणात्ममनःसंयोगस्यैव ज्ञानादिकं प्रतिहेतुभावस्यसिद्धतया परात्मवृत्तेनतस्य ज्ञानाभावात्। नापि तत्रानुमानं प्रमाणं व्याप्त्यादिज्ञाने प्रत्यक्षोपजीविन स्तस्य तदप्रसक्तावप्रवृत्तेः। एवमुपमानमपि न तत्र मानम्, सादृश्यबुद्धेरभावात्। नापि "द्यावाभूमी जनयन्नि" त्यादि श्रुतिस्तत्रमानमीश्वरोक्तत्वेन तस्याः प्रामाण्यात्, तत्र संदेहे श्रुतिप्रामाण्यस्यापि तत्राभावात्, एव श्चतुर्विधप्रमाणाभावेनेश्वरोनास्त्येवेति चेन्न। अनुमानस्यैव तत्र प्रामाण्यात्। तथाहि-यद्यत्कार्यं तत्तत्कर्तृजन्यमितिव्याप्तिग्रहे "क्षित्यङ्कुरादिकंकार्यं कर्तृजन्यं कार्यत्वाद् घटादिवदि"त्यनुमानेन तेषां कर्तृजन्यत्वसिद्धौ तत्कर्तृत्वस्यास्मदादावसम्भवेन तत्कर्तृत्वेन तत्सिद्धिः, तथाचोक्तम् "जगतांयदिनोकर्त्ताकुलालेनविनाघटः। चित्रकारंविनाचित्रं स्वत एवभवेत् तदे"ति॥ नन्वत्र क्षितित्वस्य पक्षतावच्छेदकत्वेऽङ्कुरपदंव्यर्थं तस्यापि क्षितित्वात्, अपि च क्षितित्वसामानाधिकरण्येनानुमितौ घटादौ सिद्धसाधनम्। अवच्छेदकावच्छेदेन तत्त्वे परमाणौबाधः, जन्यक्षितित्वस्य तत्त्वे परनये सर्वस्य जन्यत्वात् तत्पद व्यावर्त्याप्रसिद्धिरिति चेन्न। कार्यत्वस्यैव पक्षतावच्छेदकत्वेनादोषात्। हेतुपक्षतावच्छेदकयोरैक्यन्तु न शङ्क्यम्,प्रागभावप्रतियोगित्वरूपकार्यत्वस्यहेतुत्वेन, स्वरूपसम्बन्धविशेषरूपस्य तस्य तदवच्छेदकत्वेन चतयोर्भेदात्। अत्रानुमितौ कृतिजन्यत्वमेवसाध्यम्, कार्यमात्रंप्रतिकृतेर्हेतुत्वेन कारणतावच्छेदके लाघवात्। अथ कार्यत्वमिति सोपाधिको हेतुः, उपाधिश्च शरीर जन्यत्वम्, दृष्टान्तान्तर्भावेण साध्यव्यापकत्वं, पक्षान्तर्भावेणचसाधना व्यापकत्वं, तथाच प्रकृतोपाध्यभावेन प्रकृतसाध्याभावसिद्धिर्जाता। तथाहि, क्षित्यङ्कुरादिकं कृत्यजन्यं शरीराजन्यत्वादाकाशवदिति प्रयोगे

शरीराजन्यत्वहेतुः सत्प्रतिपक्ष इति चेन्न, त्वन्मते व्यभिचारशङ्कानिवर्तक तर्कशून्यत्वरूपानुकूलतर्काभावात्। ननु तवाप्येषदोष इति चेन्न। कृतित्वेन कार्यत्वेनकार्यकारणभावस्यैव सत्वात्। एवञ्च निरुक्तानुमानेनेश्वरसिद्धौ तत्प्रोक्तत्वेन श्रुतिप्रामाण्यनिश्चयात्साऽपि तत्र प्रमाणम्। तदुक्तं मूले चावेत्यादिना। उक्तानुमानञ्चोपलक्षणमन्यस्यापि। तदुक्तमाचार्यैः, कार्या योजनधृत्यादेः पदात्प्रत्ययतश्श्रुतेः। वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्यय इति॥ इत्यन्यत्र विस्तरः॥

## (३) शक्तिसादृश्ययोः पदार्थान्तरत्वंनिरस्यताम्?

अत्रायमभिसन्धिः। भाषापरिच्छेदे द्रव्यादयः सप्तपदार्था उक्ताः, तदयुक्तं, शक्तिसादृश्ययोरपि पदार्थान्तरत्वात्। नच शक्तिसत्वे माना भावः, अन्यथानुपपत्त्या तत्सिद्धेः, तथाहि मण्यादिसमवधाने-वह्निना दाहवारणाय मण्यादेःकारणताविघटकत्वरूपप्रतिबन्धकत्वंवाच्यम्, तच्च वह्निनिष्ठदाहानुकूलशक्तिरूपकारणविघटकत्वेनैवसिध्यत्येवञ्चोभय-त्रापि कारणत्वं सिद्धम्। नच क्लृप्तेषु पदार्थेष्वन्तर्भावान्नसापदा-र्थान्तरमिति साम्प्रतम्। शक्तिः, न द्रव्यगुणकर्मातमरूपा तदन्यतम वृत्तित्वात्, नापि सामान्याद्यन्यतमरूपा, उत्पत्तिमत्त्वे सति विनाशित्वात्, नाप्यभावरूपा-भावत्वेनप्रतीयमानत्वात्। ननु वह्नौ यदि सा शक्ति रस्ति तर्हिमण्यादिसमवधाने कुतोनदाह इतिचेन्न। तेन तस्या ध्वंसात्। ननु मण्यादेस्तन्नाशकत्वे सत्युत्तेजकेप्रतिबन्धकमण्यादावपसा-रिते वा दाहानापत्तिरिति चेन्न उत्तेजकमण्याद्यपसारणाभ्यां तज्जननादिति चेन्न। अतिरिक्तशक्तितद्ध्वंसतत्प्रागभावकल्पनायांगौरवाल्लाघवात्, दाह-त्वावच्छिन्नंप्रति मण्यभावविशिष्टवह्नित्वेन कारणतायां मण्यादिसम-वधानकाले दाहाभावोपपत्तेः शक्तेरकल्पनात्। न चैवं विशेषणविशेष्य भावे विनिगमकाभावेन वह्निविशिष्टमण्यभावस्यापि कारणत्वसिद्धेः, तवापि गौरवं तुल्यमेवेति शङ्क्यम्, वह्निमण्यभावयोः पृथक्कारणत्वे त्वत्कल्प-

तशक्त्यपेक्षया गौरवाभावात् । वह्निमण्यभावयोर्हेतुत्वापेक्षया पृथगेकस्याः शक्तेः हेतुता युक्ता लाघवादिति चेन्न । मण्यभावादेर्हेतुत्वकल्पनेनैव मणिसमवधानदशायांदाहवारणसम्भवे नानाशक्तितत्प्रागभावध्वंस कल्पनस्य शक्तिमण्यपसारणयोः कार्यकारणभावकल्पनस्यचायुक्तत्वात् । नन्वेवमुत्तेजकसद्भावे प्रतिबन्धकमणिसत्वेऽपि कथं दाहो मण्यभावरूप कारणाभावादिति चेन्न । उत्तेजकाभावविशिष्टमणेः प्रतिबन्धकत्व स्वीकारेणोत्तेजकसमवधानकालेऽपि विशिष्टाभावस्य सत्वेन दाहे बाधकाभावात् । विशिष्टाभावस्त्रिधा—विशेषणविशेष्योभयाभावप्रयुक्तभेदात् । तत्रोत्तेजकप्रतिबन्धकवह्नीनां समवधाने, आद्यः, वह्निमात्रसत्वे, द्वितीयः, वह्न्युत्तेजकसत्वे तृतीयः । प्रतिबन्धकवह्निमात्रसमवधाने दाहाभावः प्रतिबन्धकमण्यभावरूपकारणाभावात् । तस्मात् शक्ति र्नातिरिक्तः पदार्थः ।

नन्वेवं सादृश्यमतिरिक्तःपदार्थःषड्भावानन्तर्भूतत्वे सत्यभावानन्तर्भूतत्वात् । नच विशेषणासिद्धिः, सादृश्यं षड्भावान्तर्भूतम्—सामान्येतरवृत्तित्वेसतिसामान्यवृत्तित्वात् इत्यनुमानेनतत्परिहारात्—सत्यन्तनिवेशेनसामान्यत्वे न व्यभिचारः—नन्वेवं प्रमेयत्वे व्यभिचार इतिचेन्न । व्यतिरेकित्वे सति सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वेन तत्परिहारात् । यदि सादृश्यं द्रव्यादावन्तर्भूतमेव तदा द्रव्यादेः सामान्यावृत्तित्वेन यथा गोत्वं तथाश्वत्वमिति प्रतीतिर्न स्यात् । न चास्तु तस्यान्तर्भावोऽभावे, भावत्वेन प्रतीयमानत्वात्तस्मादतिरिक्तन्तदिति चेन्न । यतः, चन्द्रवन्मुखमित्यादौ चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्वं मुखे चन्द्रसादृश्यं प्रतीयते, तत्र भेदस्यान्योन्याभावे आह्लादकत्वस्य सुखरूपस्य गुणेऽन्तर्भावेणावशिष्टस्य तस्याभावेन पदार्थान्तराभाव इति ।

## (४) द्रव्यत्वजातिसिद्धिप्रकारः कीदृक् ?

अथ मूले "द्रव्यंगुण" इत्यत्रद्रव्यमित्येकवचनान्तनिर्देशेन "मनोद्रव्याणि" इत्यत्रबहुवचनेन द्रव्यत्वजातिरभिमता ग्रन्थकारस्य,

अन्यथा "जात्याख्यायाम्" इति तादृशपर्यायेण प्रयोगौ न सिध्येताम्, युक्ततरञ्चैतत् द्रव्यत्वजातिमद्द्रव्यलक्षणे जातिरूपस्य तस्य शक्यतावच्छेदकत्वे लाघवात्, तथाच तस्यजातित्वे किम्मानम्। नच घटत्वाद्यविवानुगतप्रतीतिरेवमानमिति साम्प्रतम्। नैयायिकानां घृतजत्वादौतत्प्रतीतावपि ग्रामीणानां तादृशप्रतीत्यभावात्, ननुघटादिकंविहाय घृतजत्वादौ तदभावकथनमसङ्गतं तेषांघटाद्यपेक्षयाऽप्रसिद्धत्वादिति चेन्न। अनुगतप्रतीत्यभावेबीजाभावंसूचयितुंघृताद्युपादानात्- अनुगताकृतिव्यङ्ग्यामनुष्यत्वादिजातिर्नहिं, नवद्रव्येष्वनुगताकृतिः काचित्संभवति घृतादावेकत्रापि कठिनत्वद्रवत्वयो रनियतत्वात् तथाचाभितापि द्रव्यत्वजातिरनुगतप्रतीत्या न सिध्यतीति चेन्न। यतो गुणे गुणोत्पत्तिवारणायकार्यमात्रं प्रति द्रव्यस्यैव समवायिकारणतावाच्या कार्यतावच्छेदकः सम्बन्धः समवायः, कारणतावच्छेकस्तादात्म्यम्, कार्यत्वञ्च ध्वंसवारणाय भावत्वेसतिप्रागभावप्रतियोगित्वरूपम्, तथाच प्रयोगः, समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्न कार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्ना या नवद्रव्यनिष्ठाकारणता सा यत्किञ्चिद्धर्मावच्छिन्नाघटनिष्ठकार्यतानिरूपितदण्डत्वावच्छिन्नदण्डनिष्ठकारणतावत्। एवञ्चपदार्थत्वस्य गुणादावतिप्रसक्ततया पृथिवित्वादेश्चन्यूनवृत्तितया यावद्द्रव्यसाधारणन्न्यूनानतिप्रसक्तं द्रव्यत्वमेव तदवच्छेदकं वाच्यम्, तथाच तदवच्छेदकतया तत्सिद्धिः। न च तस्यास्तस्यावच्छेदकत्वमस्तु द्रव्यत्वंजातिरेवेत्यत्रकिम्मानमिति वाच्यम्। कार्यतावच्छेदकतया कारणतावच्छेदकतया प्रतिबन्ध्यतावच्छेदकतया प्रतिबन्धकतावच्छेदकतया च सिद्धधर्मस्यासति बाधके जातित्वमिति तार्किकसिद्धान्तेन प्रकृते प्रतिबन्धकाभावात्तत्सिद्धिः। न च समवायेन नीलादिगुणं प्रतिस्वाश्रयसमवेतद्रव्यत्वसम्बन्धेन नीलादेर्हेतुत्वेस्वीकृतेनतदापत्तिः, किञ्च कार्यत्वावच्छिन्नं प्रति द्रव्यत्वावच्छिन्नस्य न सामान्यतः कारणता, सूत्रादिनापि घटाद्युत्पत्तिप्रसङ्गात्, किन्तुतत्तत्कार्यंप्रति तत्तत्कारणं भिन्नमेव, अपि च कार्यत्वावच्छिन्ना कार्यतापि न सम्भवति, तयोरैक्येन स्वस्य

स्वावच्छेदकत्वासम्भवात् । तथा चाहुः "नहि सुशिक्षितोऽपि नटः स्वस्कन्धमारोढुमर्हति" इति, एवञ्चनोक्तविधया सा सिध्यतीति चेन्न । संयोगत्वावच्छिन्नकार्यतानिरूपितजनकतावच्छेदकतया तत्सिद्धेः । ननु कालाकाशयोः संयोगस्य नित्यतया तत्रचोक्तरूपकार्यत्वस्यासत्वेनातिप्रसक्ततया न संयोगत्वं तदवच्छेदकमिति चेन्न । नित्यसंयोगानङ्गीकारात्, विभागत्वावच्छिन्नकार्यतास्वीकारेणादोषाच्च । अनुमानप्रयोगस्तु पूर्ववद्बोध्यमितिसर्वंनिरवद्यम् ।

## (५) तमसो द्रव्यत्वं निराक्रियताम् ?

ननु दशमद्रव्यस्य तमसः सत्वान्नवद्रव्याणीत्ययुक्तमिति । न च तत्र मानाभावेन नोक्तमिति वाच्यम् । चक्षुरिन्द्रियरूपप्रमाणेन तद्ग्रहणात् । ननु तमसः सिद्धावपि गुणादावेव तदाधिक्यशङ्का कुतो न क्रियत इति चेन्न । "तमो द्रव्यं रूपवत्वाद्" घटवदित्यनुमानेन तस्य द्रव्यत्वसिद्धेः, तत्रैव तच्छङ्काया युक्तत्वात् । नचानुमानेन रूपसिद्धावपि प्रत्यक्षतस्तन्न गृह्यत इति वाच्यम्, नीलं तम इति प्रत्यक्षस्य सत्वात् । ननु नीलं नभ इव साप्रतीतिर्भ्रम इति चेन्न । चलतीति प्रतीतेरभ्रमत्वात् । न चैवं तत्सिद्धावपि क्लृप्तेष्वन्तर्भाव इति वाच्यम्, तेष्वनन्तर्भावात् । तथाहि तमो न पृथिवीभवितुमर्हति, गन्धशून्यत्वात्, जलादिवत्, नापि जलतेजसी, नीलरूपवत्वात्, पक्वजम्बूफलवत्, नापि वाय्वादिषु, तेषु रूपाभावात्, तमसो रूपवत्वात् । न च द्रव्यनिष्ठलौकिकविषयतासम्बन्धेन चाक्षुषप्रत्यक्षं प्रतिसमवायेनालोकसंयोगस्य हेतुत्वात्तमसि तदभावेन न द्रव्यत्वमिति वाच्यम् । अनुभवेनतत्सिद्धौ तत्प्रत्यक्षे तन्निरपेक्षचक्षुषः कारणत्वकल्पनात् । ततश्च दशमं द्रव्यं तमः । तदुक्तम् (तमः खलु चलं नीलं परापर विभागवत् । प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हतीति) इति चेन्न । तेजोऽभावरूपतत्स्वीकारेणोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् । न च तमोऽभावस्तेजएव किन्नेति चेन्न, प्रत्यक्षानुभूयमानोष्णस्पर्शप्रत्यभावरू-

पस्य तस्य कारणत्वानुपपत्तेः। ननु तेजोऽभावस्य तमस्त्वे तेजस्त्र्यणुकसत्त्वे, चक्षुरादितेजस्सत्त्वे, हिरण्यादितेजःसत्त्वे, च कथं तमःप्रतीतिरिति चेन्न। प्रकृष्टमहत्त्वोद्भूतानभिभूतरूपवत्तेजस्त्वावच्छिन्नाभावरूपस्वीकारेणादोषात्। ननु तमसः तथात्वे रूपवत्ता प्रतीतिः कथमिति चेन्न। तत्प्रतीतेर्भ्रमत्वात्। ननु तत्प्रतीतेर्भ्रान्तित्वेऽपि चलतीतिप्रत्यक्षसिद्धकर्मवत्त्वहेतुना तस्यातिरिक्तद्रव्यत्वं सेत्स्यतीतिचेन्न। तस्याप्यन्योपाधिकत्वात्, द्रव्येऽन्योपाधिप्रतीतेरभावात्। ननु प्रतीतेर्भ्रमत्वं तत्रैव यत्रोत्तरकाले बाधोऽत्रतदभाव इति चेन्न, अभावातिरिक्ततत्स्वीकारे पार्थिवपरमाण्वादिवत्तस्यापि परमाण्वादिस्वीकारे गौरवेणाभावेऽन्तर्भावस्यैवौचित्यादिति शिवम्।

(६) प्रतिपदव्यावृत्तिप्रदर्शनपूर्वकं जातिलक्षणं व्याख्यायताम्?

अत्रायमभिसन्धिः। कारिकायाम् "सामान्यं द्विविधं प्रोक्तम्" इत्युक्तं तदयुक्तम्, विशेषबुद्धौ सामान्यज्ञानस्य हेतुत्वेन सामान्यतः सामान्यज्ञानमन्तरा तद्भेदग्रहासम्भवात्। किञ्च "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इत्यभियुक्तोक्त्या तल्लक्षणाभावेऽन्यभेदव्यवहारयोरप्रसक्तिश्चातष्टीकाकृता नित्यत्वेसत्यनेकसमवेतत्वमित्युक्तम्। तत्र संयोगविभागादीनामनेकसमवेतत्वात्तत्रातिव्याप्तिवारणाय सत्यन्तम्, जलपरमाणुरूपादावतिव्याप्तिवारणाय विशेष्यदलम्। ननु तत्र नित्यत्वे सति समवेतत्वमित्युक्त्यैवदोषाभावेऽनेकपदं व्यर्थमेवेति चेन्न। गगनपरिमाणादीनां नित्यत्वाद्गुणत्वेनगगनादौसमवेतत्वाच्च तदभावे तत्रातिव्याप्तेः। ननु लक्षणेऽनेकपदस्यैकत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वमित्यर्थेऽसंभवः, सर्वत्रैवैकत्वसंख्याया अव्यभिचारादिति चेन्न। स्वप्रतियोगिवृत्तित्व, स्वानुयोगिवृत्तित्वैतदुभयसम्बन्धेन भेदविशिष्टमनेकत्वमितिस्वीकारेणादोषात्। नन्वेवं नित्यत्वेसत्यनेकवृत्तित्वमित्येवोच्यताम्, समवायसम्बन्धावच्छिन्नवृत्तित्वबोधकसमवेतपदं व्यर्थमिति चेच्छृणु, वृत्तितायाविशेषसम्बन्धानियम्यत्वे घटात्यन्ताभावादीनां

नित्यत्वादनेकाधिकरणवृत्तित्वाच्च तत्रातिव्याप्तिवारणाय तत् । ! नन्वेवं नित्यसंयोगेऽतिव्याप्तिरिति चेन्न । तदनङ्गीकारात् । तुल्यन्यायेन नित्यसंयोगवन्नित्यविभागसिद्ध्यापत्तेश्च नतु नित्यविभागाश्रयाभावान्नस इतिचेन्न, कदापिपरस्परासंयुक्तपरमाण्वोस्तत्सम्भवात्, ननु संयोगानन्तरमेवविभागप्रतीत्यातादृशपरमाण्वोः कदापिविभागाप्रतीत्याकथंनित्यविभागाङ्गीर इतिचेन्न । क्रियानन्तरमेवसंयोगप्रतीत्यानित्येषु तदप्रतीत्या नित्यसंयोगस्याप्यसम्भवात्-ननुविभागस्य नित्यत्वे • संयोगनाशकोगुणोविभाग इति लक्षणस्य तत्राव्याप्तिरितिचेन्न,नित्यविभागानङ्गीकर्त्तुरेव तल्लक्षणाभ्युपगमात्, इदानीं विभागत्वजातेरेवतल्लक्षणत्वसम्भवात् तस्मान्ननित्यसंयोगोऽतएव "अप्राप्तयोऽस्तुयाप्राप्तिःसैव संयोगईरित" इतिवक्ष्यमाणतल्लक्षणं संगच्छत इति सर्वं चतुरस्रम् ।

## (७) जातिबाधकाः के कानि च तेषामुदाहरणानि ?

अथ जाति लक्षणेऽनेकसमवेतत्वमुक्तम्-तथा चाकाशत्वरूपजाताव्याप्तिः, आकाशस्यैकत्वादिति चेन्न । तस्या अलक्ष्यत्वात् । ननु निःसामान्यत्वे सति विशेषान्यत्वे सति समवेतत्वमित्येव तल्लक्षणं तच्चाकाशेऽपिवर्तमिति कथं तस्या अलक्ष्यत्वमिति,रूपादावतिव्याप्तिवारणायाद्यंसत्यन्तं, विशेषेतद्वारणाय द्वितीयम्-रूपध्वंसादौ तद्वारणायविशेष्यदलम्-इति चेन्न । बहुवृत्त्येकधर्मस्यसामान्यत्वेन प्रसिद्ध्यैकव्यक्तौ जातेरनङ्गीकारात् । तथा चाहुः, द्रव्यकिरणावल्यामुदयनाचार्याः (व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूपहानिरसंबन्धो जातिबाधकसंग्रह इति) तत्र व्यक्तेरभेदः, एकव्यक्तिव्यक्तिकत्वमाकाशत्वादे र्जातित्वे बाधकम् । तुल्यत्वञ्चान्यूनानतिरिक्ताश्रयकत्वम्, स्वभिन्नजातिसमनियतत्वमितियावत् तच्च घटत्वकलशत्वादीनां जातिभेदे बाधकम्, एवञ्चघटत्वकलशत्वद्वयं न जातिद्वयम् । परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्रसमावेशः संकरः, सच भूतत्वमूर्तत्वयोर्जातित्वे बाधकः । भूतत्वं विहाय मूर्तत्वस्य मनसि

वर्तमानत्वात्, मूर्तत्वं विहाय भूतत्वस्य गगने सत्वात्, तयोश्च पृथिव्यादि चतुष्टये सत्वात् । अनवस्था नामाप्रामाणिकानन्तपदार्थकल्पनाविश्रान्त्यभावः, साच जातेर्जातिमत्वे बाधिका । नच जातेर्जातिमत्वेऽव्यक्तेरभेदइत्येव बाधकः, जातेरेकत्वात्तत्र जात्यन्तरायोगादिति चेन्न । यतः, निखिलजातिष्वेकंवैजात्यं तद्वैजात्यंतदाश्रयजातिषु पुनर्वैजात्यमित्येवमनवस्था । रूपस्य लक्षणस्य स्वतोव्यावर्तकत्वस्य हानिः, विशेषस्य जातिमत्वे बाधिका । सामान्याश्रयस्यसामान्यरूपेणैवभेदकत्वनियमात्, तत्र तत्स्वीकारे तयैव तद्व्यावर्तकत्वे तत्स्वरुपहानिः । असम्बन्धश्चप्रतियोगितानुयोगितान्यतरसम्बन्धेन समवायाभावः । सच समवायाभावयोर्जातिमत्त्वे बाधकः, अत्रायंभावः यथाघटादिःसमवायेन स्वसमवायिकारणे तिष्ठति, नैवं समवायः कुत्रचित्समवायेन तिष्ठति, नापि तत्रपदार्थान्तरं समवायेन, समवायस्य समवायेन वृत्तावनवस्थाप्रसंगात् । अभावोऽपि स्वरुपसम्बन्धेनैवान्यत्रवर्तते नतुसमवायेन . नापितत्रपदार्थान्तरं समवायेन तिष्टत्यतः, तयोर्वृत्तिधर्मस्यजातित्वाभाव इति शिवम् ।

## (८) किंस्वरुपोविशेषः, तदङ्गीकारश्च कथम् ?

अत्रेदमाकूतम्–मूले "अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः" इत्युक्तम्, तदर्थश्चान्ते व्यावर्तकानामवसाने वर्तते इत्यन्त्यः, नित्यद्रव्यवृत्तिः, नित्यद्रव्यं परमाण्वाकाशादि तद्वृत्तिः, विशेष इति–तथाचान्त्यत्वे सति नित्यद्रव्यवृत्तित्वमितितल्लक्षणं सम्पन्नम् । ननूक्तव्युत्पत्त्यान्त्यत्वं स्वतोव्यावर्त्तकत्वमेव तथाचतदेवतल्लक्षणमस्तु विशेष्यदलं निरर्थकमिति । नच समवायव्यावृत्यर्थं तदिति वाच्यम् । तस्यापि परमाण्वादिनित्यद्रव्यवृत्तित्वात् । नच वृत्तित्वं समवेतत्वमेव विवक्षितं तेन तत्रातिव्याप्त्यभाव इति वाच्यम् । तावतापि नित्यपदव्यावर्त्यालाभादिति चेन्न । स्वतोव्यावृत्तत्वमात्रस्यैव तल्लक्षणत्वेन विशेष्यांशस्य तत्स्थान कथनपरत्वात् । एवञ्च स्वतोव्यावृत्तत्वमेवविशेषत्वम् । नन्वीदृश

विशेषपदार्थः किमर्थः स्वीक्रियत इति चेत्, यद्यप्ययंघटः,अस्माद् घटा-द्भिन्नो भिन्नावयवारब्धात्, एवं घटावयवेऽपि तेनैव हेतुनाभेदः सिध्यति द्व्यणुकेऽपि तेनैव हेतुना व्यणुकान्तराद्भेदः, परमाणौ तु परमाण्व-न्तराद्भेदो न सिध्यति तदारम्भकावयवान्तराभावात् । तत्राभेदेद्व्यणुका दावप्यभेदे घटयोरप्यभेदःस्यादतःपरमाणुवृत्तिविशेषपदार्थः स्वीक्रि-यते तेनैवचपरमाण्वोर्भेदसिद्धौ घटादिपर्यन्तोभेदःसिध्यति, नच पर-माणु विशेषयोर्मध्ये, विशेषान्तराभावेन तयोरेवाभेदः तत्रविशेषान्तर स्वीकारेचानवस्था स्यादिति चेन्न । तस्य स्वतोव्यावृत्तस्योक्तत्वात् । तत्वञ्च स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसजातीयेतरभेदानुमित्य विषय-त्वम् । विशेषेऽपि स्वलिङ्गकस्वसजातीयविशेषान्तरभेदानुमिति विषय-त्वात्–असम्भवोऽतः स्वभिन्नलिङ्गकेति, घटो विशेषाद्भिन्नः कपालसम-वेतत्वात्–इत्यत्र विशेषभिन्नलिङ्गत्वात्–पुनरसम्भवोऽत्तोलक्षणे स्ववि-शेष्यकेति-साजात्यंपदार्थविभाजकोपाधिमत्त्वेन-तेनद्रव्यादेरपिप्रमेयत्वेन वि-शेषजातीयत्वेऽपि नातिव्याप्तिः, स्वंपक्षत्वेनाभिमतं घटादि-तद्भिन्नं लिङ्गं स्वावयवारब्धत्वं तज्जन्या-स्वसमानजातीयेतरभेदानुमितिः, अयंघटो घटान्तराद्भिन्नइति-तदनुमितिविषयत्वं घटस्याविषयत्वं विशेषस्येति सम-न्वयः । नव्यास्तु नित्यद्रव्येष्वेव स्वतोव्यावृत्तत्वमङ्गीकृत्य विशेषन्नाद्रि-यन्ते इत्यन्यत्र विस्तरः ।

## (६) समवायस्वीकारे का युक्तिः ?

"घटादीनां कपालादौ द्रव्येषु गुण कर्मणोः । तेषु जातेश्चसम्ब-न्धः समवायः प्रकीर्तितः" इत्यत्र घटकपालपदमवयवावयविनोरुपलक्ष-णम्, तत्रत्य चकारश्च नित्यद्रव्यविशेषयोः समुच्चायकः, तथा चावयवावयवि नोः, गुणगुणिनोः, क्रियाक्रियावतोः, जातिव्यक्त्योः नित्यद्रव्यविशेषयोश्च सम्बन्धः समवाय इति लब्धम् । समवायत्वञ्च नित्यत्वे सति सम्ब-न्धत्वम्, संयोगाकाशयोरतिव्याप्तिवारणाय क्रमेण दलद्वयम् । नित्य-

संयोगेऽतिव्याप्तिस्तु न शङ्क्या तदनङ्गीकारात् । ननु समवायस्य सम्बन्धत्वे मानाभाव इति चेन्न । अनुमानस्यैव मानत्वात् । तथाहि रूपवान् घटः क्रियावान् घटइत्याकारिका विशिष्टबुद्धिः, विशेषणविशेष्यसम्बन्धविषया, विशिष्टबुद्धित्वात्, याया विशिष्टबुद्धिः सासैतत्त्रयविषया यथादण्डीपुरुष इतिविशिष्टबुद्धिस्तथाचेयं तस्मात्तथा । ननूक्तानुमानेन सम्बन्धमात्रसिद्धिः सच संयोग एव किन्नेति चेन्न । द्रव्ययोरेव संयोग इति नियमेन तस्यासम्भवात् । नचायुतसिद्धयोः स्वरूपसम्बन्ध इति मीमांसकसिद्धान्तान्निरुक्तानुमानेन स्वरूपसम्बन्ध एव तत्रास्त्विति चेन्न । तथा सतिसिद्धसाधनप्रसंगात् । ननु सिद्धमपिपदार्थमनुमानेन साधयन्ति तर्करसिकाइत्यभियुक्तोक्तेनैव तत्सिद्धिस्तवदोपावहेति वाच्यम् "गणनाथं प्रकुर्वाणं रचयामास वानरम्" इति लौकिकानामाभाणकेनार्थान्तरापत्तेः । ननूक्तरीत्यासमवायसिद्धावेव दोपद्वयेनोद्धारस्तत्सिद्धावेव किंविनिगमकमिति चेन्न । अनन्तस्वरूपाणांसम्बन्धत्वकल्पनापेक्षया क्षित्यङ्कुरादिकर्तृत्वेनैकेश्वरसिद्धिवत्तेनानुमानेननित्यैकसमवायसिद्धेः । ननु तस्यैकत्वे सम्बन्धसत्तया सम्बन्धिसत्ताकल्पनेन रूपवान् वायुरिति बुद्धेःप्रमात्वप्रसङ्ग इति चेन्न । तस्यैकत्वेऽपि रूपनिरूपितत्व विशिष्टसमवायस्यैव तद्वत्ताबुद्धेर्नियामकत्वेन वायौ रूपाभावेन तादृश बुद्धेः प्रमात्वाभावात् । ननुविशिष्टं शुद्धान्नातिरिच्यते इति सिद्धान्तात्, विशिष्टसमवायोऽपिवायौविद्यत इति चेन्न—रूपनिरूपितत्व विशिष्टसमवायनिरूपिताधिकरणतायाएवरूपसम्बन्धत्वात्तस्यच वायावभावात्—नन्वेवं भूतलादावभावस्य वैशिष्ट्यं सम्बन्धान्तरं सिद्ध्येदिति चेन्न । विकल्पासहत्वात् । तथाहि—अस्तु वैशिष्ट्यं सम्बन्धः, सच नित्योऽनित्यो वा । नाद्यः तस्य नित्यत्वे घटाभाववति देशे घटानयनेऽपि घटाभावबुद्धिप्रसंगात् । नच घटानयनकाले तत्र घटाभावस्य नष्टत्वात्, न तादृशबुद्धिप्रसङ्ग इति वाच्यम् । घटानयने घटाभावनाशे तदभाववति देशेऽपि घटाभावबुद्धेःप्रसङ्गात् । न द्वितीयः तदनित्यत्वे

स्वरूपसम्बन्धवत्तस्य नानात्वे ततोऽवैलक्षण्यात् । ननु त्वन्मतेऽपि पाकेन रक्ते घटे श्यामरूपसमवायसत्वात्, श्यामरूपवत्ताधीप्रसङ्ग इति चेन्न । दत्तोत्तरत्वात् । नन्वभावस्थले वैशिष्ट्यानङ्गीकारे तत्र कः सम्बन्ध इति चेत्स्वरूपमिति गृहाण । ननु स्वरूपस्यानुयोगिप्रतियोग्यन्यतररूपवत्त्वेन तवाभावस्य नित्यतया भूतलस्य च सत्वाद्वैशिष्ट्यनित्योक्तस्थल इव त्वयापि स दोषो दुरुधर इति चेन्न । घटाभाववद्भूतलमितिज्ञानकालीन यत्र भूतले घटाभावबुद्धिस्तद्भूतलादिकं यस्ययस्याभावस्य बुद्धिः तस्य तस्यैतादृशसम्बन्धस्वीकारेणादोषात् ।

वस्तुतस्तु समवायसम्बन्धेन घटादिकार्यम्प्रति तादात्म्येन कपालादेः कारणत्वस्य सिद्धतया कार्यतावच्छेदकसम्बन्धविधया समवायः सिध्यति । नच स्वरूपसम्बन्धएव तत्रकार्यतावच्छेदकोऽस्त्विवतिशङ्क्यम् । तथा सति यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणमिति व्यवस्थोच्छेदप्रसङ्गात् । नच तत्र यत्सम्बद्धमित्येववाच्यमिति साम्प्रतम् । कपालसम्बद्ध घटध्वंसंप्रति कपालस्यसमवायिकारणत्वप्रसङ्गात् । इष्टापत्तौ समवायिकारणनाशे कार्यनाशस्यध्रौव्यात्. कपालनाशे घटध्वंसस्यापि ध्वंसापत्तेः । तस्यापीष्टत्वे, पुनर्घटोन्मज्जनापत्तेः ।

(१०) स लक्षणोदाहरणमभावसामान्यविशेषं प्रदर्श्य तस्याधिकरणरूपत्वेऽनुपपत्तिः परिहरणीया ?

अत्रायमभिप्रायः । न तावदभावत्वं भावभिन्नत्वम्, भावस्याभावभिन्नत्वेऽन्योन्याश्रयात्, किन्तु द्रव्यादिषट्कान्योन्याभाववत्त्वरूपम् । नचवंद्रव्यादावतिव्याप्तिस्तत्रापिपरस्परभेदस्यसत्वादिति चेन्न । द्रव्यादीनांषट्को योऽन्योन्याभावस्तद्वत्वमित्यर्थस्वीकारे द्रव्यंनेत्यारभ्य समवायोनेत्यन्तंद्रव्यादि षट्कप्रतियोगिकोन्योन्याभावोऽभावसामान्ये, एवेत्यदोषात् । वस्तुत इदमप्ययुक्तमभावसामान्यलक्षणेऽन्योन्याभावस्य, वक्ष्यमाणतल्लक्षणेऽभावसामान्यस्यप्रविष्टत्वेनान्योन्याश्रयात्, नापि नञ् पदजन्य प्रतीतिविषयत्वं प्रागभावादावव्याप्तेः । नापि प्रतियोगिज्ञानाधीन

ज्ञानविषयत्वरूपः सम्बन्धाऽव्यातिव्याप्तेः । नापि समवायसामानाधिकरण्यान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावरूपः आत्माश्रयात् । किन्त्वभावत्वमखण्डोपाधिः । सचाभावोद्विधा संसर्गाभावान्योन्याभावभेदात् । तत्र संसर्गाभावत्वमन्योन्याभावभिन्नत्वे सत्यभावत्वम् । तत्रान्योन्याभावघटयोरतिव्याप्तिवारणाय विशेषणविशेष्ये । अन्योन्याभावत्वञ्च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । नच संयोगावच्छिन्नप्रतियोगिताक संयोग्यत्यन्ताभावे संयोगितादात्म्यस्य संयोगरूपत्वात्तत्रातिव्याप्तिरितिवाच्यम्, तादात्म्यत्वावच्छिन्नतादात्म्यनिष्ठा या संसर्गविधयावच्छेदकता तन्निरूपकप्रतियोगिताकाभावत्वस्य विवक्षितत्वेनादोषात्, घटोन पट इत्यादौ सः । आद्यस्त्रिधा–प्रागभावप्रध्वंसाभावात्यन्ताभावभेदात् । तत्रध्वंसप्रतियोगित्वेसत्यभावत्वं प्रागभावत्वम्, ध्वंसघटयोरतिव्याप्तिवारणायक्रमेण दलद्वयम्, घटोभविष्यतीत्याद्युदाहरणम्. प्रागभावप्रतियोगित्वे सत्यभावत्वं ध्वंसत्वम् । प्रागभावघटयोरतिव्याप्तिवारणायक्रमेण-दलद्वयम्, घटो नष्टइत्याद्युदाहरणम् । नित्यत्वे सति संसर्गाभावत्वमत्यन्ताभावत्वम् ध्वंसादिवारणाय सत्यन्तम् । आकाशादिवारणाय विशेष्यदलम् । नच विशेष्येऽभावमात्रेण तत्रातिव्याप्तिनिरासे संसर्गेति व्यर्थमिति वाच्यम् । अन्योन्याभावेऽतिव्याप्तिवारणार्थं तत्सत्वात् । घटोनास्तीत्यादौ सः । नचात्यन्ताभावस्य नित्यत्वे भूतलादौ घटानयनेऽपि घटाभावबुद्धिप्रसङ्गइति वाच्यम् । तत्तत्कालीनंतत्तद्भूतलादिकं तत्तदभावानां सम्बन्ध इत्यनेन दत्तोत्तरत्वात् । ननु घटकालेघटात्यन्ताभावबुद्धेरभावेऽपि तदुत्पत्तेः प्राक् तदत्यन्ताभावबुद्धिः स्यादेवेति चेन्न । ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावानङ्गीकारात् । नचैवं रक्तरूपप्रागभावाधिकरणे श्यामघटे रक्तोनास्ति, श्यामरूपध्वंसाधिकरणे रक्तघटे श्यामोनास्तीतिप्रतीतिः कथमिति वाच्यम् । तयोः प्रतीत्योः प्रागभावध्वंसविषयत्वात् । वस्तुतस्तु ध्वंसप्रागभावयोरत्यन्ताभावेन सहविरोधे मानाभावेन तयोर्बुद्ध्योरत्यन्ताभावविषयत्वे बाधकाभावः ।

अतएव पूर्वमग्रेऽपि रक्ते मध्ये श्यामे घटे रक्तं रूपं नास्तीति प्रत्ययः, तस्य सामान्याभाव विषयत्वात् । नन्वभावस्तुद्विधेतिविभागोऽनुपपन्नः तत्रैव मानाभावात्, नच घटोनास्तीत्यादावभावबुद्धिः प्रत्यक्षसिद्धेति वाच्यम्, तस्याःभूतलाद्यधिकरणविषयत्वेनोपपत्तेरिति चेन्न । प्रतीति निर्वाहाय तस्यानन्ताधिकरणात्मकत्वकल्पनापेक्षयाऽभावातिरिक्तकल्पनाया लघीयस्त्वात् । नचाभावाङ्गीकारेऽपि तदधिकरणं तत्रापि सिद्धमेव तस्यैवाभावत्वेऽपिनास्तिगौरवमिति वाच्यम् । घटाभावभूतलयोरैक्ये घटाभाववद्भूतलमित्याधाराधेयभावानापत्तेः । नन्वभावाधिकरणकाभाव-स्याधिकरणात्मकत्वं लाघवाद्भवता यथाङ्गीक्रियते तथैवात्राप्युपपत्तिरिति चेन्न । येनेन्द्रियेण याव्यक्तिगृ ह्यते तद्गता जातिस्तदभावश्च तेनैवेन्द्रियेणेति सिद्धान्तेन शब्दाद्यभावानां तेनेन्द्रियेणाग्रहणप्रसङ्गात्, अतएव ज्ञानवि-शेषः काल विशेषश्च न तत्प्रतीत्यनुपपत्तेरिति संक्षेपः ।

## (११) भावत्वं केषां साधर्म्य मित्यभिधीयताम् ?

"द्रव्यादयः पञ्च भावा अनेके समवायिनः" इत्यनेन द्रव्यादीनां पञ्चानां भावत्वंसाधर्म्यमुक्तम् । भावत्वञ्च समवायैकार्थान्यतरप्रत्यासत्त्या सत्तावत्त्वम् । ननु "अत्र सप्तमस्याभावकथनादेव षण्णां भावत्वं प्राप्तम्" इति ग्रन्थेन द्रव्यादीनां षण्णां साधर्म्यं लभ्यते तत्कथं पञ्चा-नामेवोच्यत इति चेन्न षण्णां भावत्वस्य स्पष्टतया विशेषतस्तदुक्तेः । ननु कारिकया भावान्तस्योद्देश्यत्वप्रतीत्या अनेकत्वमात्रमेवसाधर्म्यं लभ्यते ननु भावत्वमिति चेन्न । तत्र पञ्चान्तस्यैवोद्देश्यत्वेन भावानेकत्वयोः साध-र्म्यलाभात् । ननु प्रागभावादिभेदेनाभावेऽप्यनेकत्वसत्त्वात्तत्रातिव्याप्ति-रिति चेन्न । अनेकत्वे सति भावत्वस्य विवक्षणेनादोषात् । नन्वनेकत्वस्य बहुत्वरूपत्वे गुणादावव्याप्तिः, गुणादौगुणाद्यनङ्गीकारात् । यत्किञ्चिदेक भिन्नत्वे तु समवायेऽतिव्याप्तिरितिचेन्न । भेदविशिष्टत्वेसति भाववृत्तित्व-स्य विवक्षणेनादोषात् । वै. स्वप्रतियोगिवृत्तित्व स्वानुयोगिवृत्तित्वोभय

सम्बन्धेन । नन्वाकाशघटादेः प्रत्येकमेकत्वात्तत्राव्याप्तिरिति चेन्न । निरुक्त-स्वरूपानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वस्य विवक्षितत्वेनादोषात् । न चानेकभाववृत्तिधर्मवत्त्वमिति वक्तव्ये तादृशोपाधिमत्त्वं निष्फलमिति युज्यते । भावत्वरूपमादायसमवायेऽतिव्याप्तेः । नन्वेवंकालिकसम्बन्धेन निरुक्तोपाधिमत्त्वं ध्वंसस्याप्यस्तीतिचेन्न । समवायस्वरूपान्यतरसम्बन्धस्य विवक्षणेन स्वरूपस्य च कालिकसम्बन्धभिन्नस्य च तत्वेन तत्रानतिव्याप्तेः । नन्वेवं मूलोक्तसमवायित्वस्य समवायसम्बन्धावच्छिन्नवृत्त्यधिकरणत्वस्य ग्रहणे सामान्यादावव्याप्तिस्तत्र तादृशसम्बन्धावच्छिन्नवृत्त्यधिकरणत्वा-भावादिति चेन्मैवम् । तत्र षष्ठ्यर्थे मत्वर्थीयप्रत्ययस्वीकारेण समवायस-म्बन्धेन सम्बन्धित्वस्य विवक्षितत्वेनोक्तापत्तेरभावादिति, समवायेतुनतत्त्वं तस्य समवायसम्बन्धसम्बन्धित्वाभावात् । यत्र च मुक्तावल्यां समवेतवृत्ति-पदार्थविभाजकोपाधिमत्त्वमितिपाठोऽधिकस्तत्रेत्थंव्याख्येयम्-समवायित्वस्य समवायसम्बन्धेनसम्बन्धित्वमितिव्याख्याने षष्ठ्यर्थेमत्वर्थप्रत्ययेसमवाय-सम्बन्धप्रतियोगित्वमर्थः, सप्तम्यर्थेतदनुयोगित्वम् आद्येपरमाण्वाकाशादाव-व्याप्तिस्तेषांसर्वदैवानुयोगित्वात्-अन्त्येसामान्यविशेषयोरव्याप्तिस्तयोः प्र-तियोगित्वात्-अतःसमवेतेत्यादिः—समवेतः समवायसम्बन्धानुयोगी प्रति-योगीवा-तद्वृत्तिः पदार्थविभाजकोपाधिर्द्रव्यत्वसामान्यत्वविशेषत्वादिस्त-द्वत्त्वंनित्यद्रव्यादावपि-इतिसमन्वयः ।

(१२) गुणादीनां किं साधर्म्यं तदतिप्रसक्तिश्च कथमुत्पत्तिकालीनघटादौ, तदानीं तेषां किमिति निर्गुणत्वम् , तदुद्धारश्च कीदृशः ।

"गुणादिर्निर्गुणक्रियः" इत्यनेन निर्गुणत्वं निष्क्रियत्वञ्च गुणादीनां साधर्म्यमुक्तम् । तत्र निर्गुणत्वंनिष्क्रियत्वञ्च न गुणभिन्नत्वादिरूपं तथा सति गुणक्रिययोरन्योन्याभावमादाय द्रव्येऽतिव्याप्तेः , किन्तुगुणक्रिया-त्यन्ताभावत्वरूपम् । नन्वेव "मुत्पन्नं द्रव्यं क्षणमगुणमक्रियञ्च तिष्ठति" इति तार्किकसिद्धान्तादुत्पत्तिकालीनघटादावव्याप्तिः । नच

गुणगुणिनोः सव्येतरविषाणवत् समानकालोत्पत्तिकत्वेनकथं तदानीं तेषां गुणशून्यत्वमितिचेन्न। घटादेः स्वगतरूपादिकंप्रति समवायिकारणत्वसिद्धान्तान्यथानुपपत्त्या तदानीं तस्यनिर्गुणत्वकल्पनात्। नन्वेवं चाक्षुषप्रत्यक्षेरूपस्यकारणतयाघटादेराद्यक्षणे प्रत्यक्षं न स्यादिति चेन्न। तदानीं तदप्रत्यक्षस्येष्टत्वात्। ननु घटोत्पत्तिकाले रूपाङ्गीकारेऽपि तत्पूर्वक्षणे तदभावेन संयुक्तसमवायरूपसन्निकर्षाभावेन न रूपप्रत्यक्षं सम्भवति कथमिष्टापत्तिरतःपरमाणौद्रव्यत्वादिप्रत्यक्षवारणाय चक्षुःसंयुक्तेत्यादिसन्निकर्षे योग्यत्वविशेषणदानेद्व्यणुकचाक्षुषव्यभिचार वारणाय संयुक्तसमवायस्यद्रव्यान्यद्रव्यसमवेतचाक्षुषत्वस्यैवकार्यतावच्छेदकत्वेन घटादेरेवतेनसम्बन्धेन प्रत्यक्षासम्भव इत्यभिप्रायात्, तथाच तादृशघटादावतिव्याप्तिरिति चेन्न। गुणवद्वृत्तिधर्मवत्त्वस्य ग्रहणेनादोषात्। तथाहि गुणवद्द्रव्यं तद्वृत्तित्वं गुणत्वादौ नतुद्रव्यत्वादावितिसमन्वयः। न चैवं क्रियाशून्यत्वं गगनादावति प्रसक्तमितिचेन्न। कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वस्यतदर्थत्वात्। कर्मवद् द्रव्यं तद्वृत्तिः पदार्थविभाजकोपाधि गुणत्वादि तद्वत्त्वं गुणादीनाम्। नन्वेवं कर्मवद्वृत्त्युपाधिमत्त्वमित्येवोच्यताम् पदार्थविभाजकेतिव्यर्थमितिचेन्न। द्रव्यविभाजकाकाशत्वरूपोपाधिमादाय तत्रैवातिव्याप्तेरिति शिवम्।

(१३) किन्नामपारिमाण्डल्यं कथङ्कारंतस्याकारणत्वम्।

" पारिमाण्डल्यभिन्नानांकारणत्वमुदाहृतम् " इति मूलं तत्र पारिमाण्डल्यं परमाणुपरिमाणमित्युक्तं तच्च द्व्यणुकपरिमाणस्याप्युपलक्षणम्। तथा च परमाणुद्व्यणुकपरिमाणभिन्नानां कारणत्वं साधर्म्यम्। ननु समवायिकारणगुणाः कार्यगुणानामसमवायिकारणमितिसिद्धान्तात् कथं तस्याकारणत्वमितिचेत्तस्य कारणत्वेद्व्यणुकपरिमाणेऽणुपरिमाणजन्यत्वम्, त्र्यणुकपरिमाणेद्व्यणुकपरिमाणजन्यत्वञ्चस्यात्, तथाच परिमाणस्यस्वविभाजकरूपाणुत्वमहत्त्वादिरूपसाजात्यवदुत्कृष्टपरिमाणजनकत्वनियमात्, महदारब्धे महत्तरत्ववदणुजन्येऽणुतरत्वप्रसङ्गे त्र्यसरेणोरणुतमत्वेमहत्त्वाभावेनाचाक्षुषत्वप्रसङ्गः। नन्वेवं द्व्यणुकत्र्यणुकपरिमाणयोः किमसमवायि-

कारणमितिचेत्-परमाणुद्वयगतद्वित्वसंख्याद्व्यणुकेतत्त्रितयगतत्रित्वसंख्या त्र्यणुकेइतिगृहाण। ननु परिमाणस्यसंख्याजन्यत्वेघटादिपरिमाणस्य कपालादिगतद्वित्वसंख्यैवोत्पत्तौकिमितितत्रकपालपरिमाणं कारणं मन्यसे इति चेन्न। अणुद्वयगतद्वित्वसंख्यया द्व्यणुकेमहत्त्वोत्पत्तिभियाद्वित्वसंख्याया महत्त्वाजनकत्वनियमात्। ननु घटगतमहत्त्वं प्रति कपालगतमहत्त्वस्य कपालगतद्वित्वस्यवाहेतुत्वेविनिगमनाभावइतिचेन्न। कपालगतमहत्त्वोत्कर्षेण घटगतमहत्त्वोत्कर्षस्यानुभवसिद्धत्वात्। न च प्रचयस्तत्रकारणमितिवाच्यम्। तत्र तस्याप्यसम्भवात्। ननु योगिप्रत्यक्षे विषयविधया पारिमाण्डल्यस्यकारणत्वात् तद्भिन्नानां कारणत्वयुक्तमितिचेन्न, तेषां योगजधर्मेणातीतानागतविषयकप्रत्यक्षवत्तस्यापितत्सम्भवात्। मूले पारिमाण्डल्येत्युपलक्षणं परममहत्परिमाणातीन्द्रियसामान्यविशेषणानामपि। ननु ज्ञायमानसामान्यस्य प्रत्यासत्तित्वेन ज्ञायमानहेतोश्चानुमितिकरणत्वेन तस्य सामान्यलक्षणाजन्यज्ञानेऽनुमितौ च कारणत्वात्तस्याकारणत्वमयुक्तमिति चेन्न। सामान्यज्ञानस्य प्रत्यासत्तित्वेनानागतादिलिङ्गकानुमितिसिद्ध्यर्थमनुमितौ लिङ्गज्ञानस्यहेतुत्वेनचोक्तापत्तेरभावात्। एतेनमनस्त्वस्यातीन्द्रियजातेर्योगिप्रत्यक्षेसामान्यलक्षणप्रत्यासत्तिविधयाकारणत्वम्-अयमणुरणवन्तराद्भिन्नो-विशेषादित्यनुमितौविशेषस्यकारणत्वशङ्कापिपरास्ता-सामान्यज्ञानस्यलिङ्गज्ञानस्य च हेतुत्वस्यवक्ष्यमाणत्वात्-धूमादित्यादिहेतुपदंतज्ज्ञानपरं भाक्तम्। नन्वेवंविषयतयाद्रव्यलौकिकप्रत्यक्षे समवायेनमहत्त्वस्यहेतुत्वादात्मपरममहत्त्वस्यात्ममानसप्रत्यक्षेहेतुत्वात्तस्य न कारणत्वमित्ययुक्तमिति चेन्न, आकाशादिनिष्ठ परममहत् परिमाणस्याकारणत्वाभिमतत्वात्। अथ कारणत्वञ्चान्यत्रपारिमाण्डल्यादिभ्य इति भाष्यम्। आदिग्रहणात्परममहत्त्वं गृह्यते इत्याचार्यग्रन्थस्तत्र सामान्यतः परममहत्त्वस्य ग्रहणादात्मपरिमाणमपि न कस्यापि कारणमित्यभिप्रायो लभ्यत इति चेन्न "कारणत्वञ्च ज्ञातृधर्मेतरभावकार्यापेक्षया" इत्याचार्यग्रन्थेन ज्ञातृधर्मज्ञानादिभिन्नं भावकार्यं प्रत्येवात्मपरिमाणस्याकारणत्वलाभादिति सर्वं सुपुष्कलम्।

( १४ ) सलक्षणोदाहरणं सामान्यविशेषकारणं निरूपणीयम् ?

अत्रायमर्थः"अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता,कारणत्वं भवेत्" इत्यनेनान्यथासिद्धभिन्नत्वे सति कार्याव्यवहितप्राक् क्षणावच्छेदेन कार्याधिकरणनियतपूर्ववृत्तिजातीयत्वं कारणत्वमितिलभ्यते, दण्डत्वादावतिव्याप्तिवारणायसत्यन्तम्, रासभेऽतिव्याप्ति वारणायनियतेति, अरण्यस्थ दण्डेऽव्याप्तिवारणाय जातीयेति। न च नियतपूर्ववर्तिजातीयत्व निवेशे द्रव्यत्वादिना घटपटादीनामपि कारणतापत्तिरिति चेन्न। दण्डत्वादिमत्वस्यैवनियतपूर्ववृत्तितास्वीकारेणादोषात्। ननु दण्डत्ववद्द्रव्यत्वस्यापि तत्वे तदेवकिन्नेति चेन्न। लघुनियतपूर्ववर्तितावच्छेदकस्य तेनाभिधानात्। नन्विदमेवलघ्विति कथमवगतमितिचेदनन्तद्रव्येषुघटकारणत्वापत्तौ गौरवात्, तदपेक्षया तत्र लाघवात्। तच्च त्रिविधम्, समवाय्यसमवायिनिमित्तभेदात्। तत्र समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतावत्वं समवायिकारणत्वं, यथा घटंप्रतिकपालं, स्वगतरूपादिकं प्रति घटः। समवायिकारणे प्रत्यासन्नत्वे सति कारणत्वमसमवायिकारणत्वम्, यथा कपालसंयोगः घटंप्रति, घटरूपं प्रतिकपालरूपम्। समवायिकारणेऽतिव्याप्तिवारणाय समवायिकारणेति, कपालत्वादावतिव्याप्तिवारणाय कारणेति। नन्वेवं तुरीतन्तुसंयोगस्य पटसमवायिकारणे तन्तौप्रत्यासन्नत्वात्पटासमवायिकारणत्वापत्तिः, इष्टापत्तौ तुरीतन्तुसंयोग नाशे पटनाशापत्तिः, असमवायिकारणनाशस्य द्रव्यनाशजनकत्वात्। नच द्रव्यनाशेतत्समवायिकारणनाशएव कारणमस्त्विति वाच्यम्, परमाणोर्नित्यतया तन्नाशाभावेनद्व्यणुकनाशान्यथानुपपत्या तत्रैव तत्कारणत्वकल्पनात्। नन्वेवं तन्तुनाशे विनैवसमवायिकारणं पटस्य क्षणद्वयं स्थितिः स्यादिति चेन्न, इष्टत्वात्। ननु द्रव्यनाशे समवायिकारणनाशस्यापि पृथक् कारणत्वेन निर्वाहे इष्टापत्तिरयुक्तेति चेन्न। कारणान्तरकल्पने गौरवादिति चेन्न, तुरीतन्तुसंयोगभिन्नस्य पटसमवायिकारणे प्रत्यासन्नस्यैव तदसमवायिकारणत्वस्वीकारात्। तुरीपटसंयोगं प्रति तुरीतन्तुसंयोगस्या-

समवायिकारणत्वात्तत्सामान्यलक्षणे तद्भिन्नत्वशङ्का न कार्या । एवं वेगादीनामभिघाताद्यसमवायिकारणत्वन्न तदसमवायिकारणे तद्भिन्नत्वनिवेशात् । नन्वेवं ज्ञानादेरिच्छादिकंप्रति तत्त्वं स्यादिति चेन्नैवम् , आत्मविशेषगुणानां कुत्राप्यसमवायिकारणाभावेन तत्सामान्यलक्षण एव तद्भिन्नत्व सन्निवेशात् । नन्वेवं समवायिकारणे प्रत्यासन्नत्वं तादात्म्यादिना ग्रहणे समवायिकारणस्यापि तत्त्वापत्तिरिति चेन्न । कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्तेस्तत्र विवक्षणात् । कार्यैकार्थप्रत्यासत्तिः समवायसम्बन्धः, कारणैकार्थप्रत्यासत्तिः स्वसमवायिसमवेतत्वसम्बन्धः, तथाच समवायिस्वसमवायिसमवेतत्वान्यतरसम्बन्धेन समवायिकारणे प्रत्यासन्नत्वेसति, आत्मविशेषगुणभिन्नत्वेसति कारणत्वमसमवायिकारणत्वमिति निष्कृष्टलक्षणं पर्यवसन्नम् । उक्तोभयभिन्नत्वे सति कारणत्वं निमित्तकारणत्वम् , यथा घटम्प्रति कुलालचक्रचीवरादिकम् , आद्ययोरतिव्याप्तिवारणाय सत्यन्तम्, दण्डत्वादौ तद्वारणाय विशेष्यम् । तदुक्तं मूले यत्समवेतेत्यादिना, इत्येवं कारणसामान्यविशेषोदाहरणग्रन्थ इति ।

## ( १५ ) कियन्तः केऽन्यथासिद्धा उच्यन्तान्ते समासतः ?

अत्रायमभिसन्धिः—पारिमाण्डल्यभिन्नानामित्यत्रकारणस्वरूपं साधर्म्यमुक्तम्, तदपेक्षयापूर्वन्नग्रन्थे समवायिकारणादिभेदेन तन्निरूपितम् , तत्र कारणसामान्यलक्षणेऽन्यथासिद्धशून्यस्येत्युक्तम्, तत्रान्यथासिद्धत्वजिज्ञासायां येन सह पूर्वंभावमित्यादिना तल्लक्षणमुक्तम् । तत्राद्योऽन्यथासिद्धः, तद्धर्मावच्छिन्ननियतपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वेसति तद्धर्मावच्छिन्नम्प्रति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्नम्प्रत्यन्यथासिद्धः, द्वितीयोन्यथासिद्धेऽतिव्याप्तिवारणाय सत्यन्तम्, कपालसंयोगे घटपूर्ववर्तित्वग्रहे कपाले विशेष्यतावच्छेदकत्वसत्वात्तत्रातिव्याप्तिवारणाय विशेष्यम् , यथा दण्डत्वादिकं घटम्प्रत्यन्यथासिद्धम् । न चैवंदण्डत्वमेवहेतुरस्तु दण्डएवान्यथासिद्धः कुतोनेति चेन्न । दण्डत्वस्य घटम्प्रति

कारणत्वे स्वाश्रयजन्यभ्रमिजन्यभ्रमिमत्त्वरूपसम्बन्धे दण्डत्वस्यापि प्रविष्टत्वे गौरवात्, ममतु स्वजन्यभ्रमिजन्यभ्रमित्वसम्बन्धे दण्डत्वा प्रवेशे लाघवम् । द्वितीयम्, स्वातन्त्र्येणयत्तत्कार्यनिरूपितान्वयव्यतिरेकशून्यत्वेसति तत्कार्यकारणावच्छिन्नस्वनिष्ठतत्कार्यनिरूपितनियतपूर्ववर्तित्वग्रहविशेष्यताकं तत्कार्यम्प्रत्यन्यथासिद्धम्, कपालसंयोगेऽतिव्याप्ति वारणाय विशेषणम्, दण्डत्वादिवारणाय विशेष्यम् । अत्रायम्भाव.—कार्यकारणयोरन्वयव्यतिरेकनियमस्तत्र दण्डरूपस्य घटम्प्रति कारणत्वे दण्डसहितस्यैव रूपस्यान्वयतिरेकौ नतु रूपघटयोः, पटादिरूपसत्त्वेऽपिघटाद्युत्पत्तेरदर्शनादिति, एवञ्च घटम्प्रति दण्डरूपाद्यन्यथासिद्धम् । यद्यपीतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालित्वरूपेणाद्ययोः संग्रहस्तथापि तयोः प्रकारान्तरेण व्युत्पादनं प्रपञ्चार्थम् । तृतीयंयथा, फलानुगुणमन्यम्प्रति नियतपूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यम्प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यम्प्रत्यन्यथासिद्धत्वम्, यथाघटादिकम्प्रत्याकाशस्य तस्यघटम्प्रति, आकाशत्वेन कारणता वाच्या, तत्वञ्च शब्दसमवायिकारणत्वम् एवञ्च शब्दम्प्रति तत्रजनकत्वसिद्धावेव घटादिकम्प्रति सिध्यत्यतः तम्प्रति तदन्यथासिद्धम् । कुलालम्प्रति जनकत्वग्रहपूर्वकमेव कुलालपितुः घटम्प्रति जनकत्वात्, अनेनैव तत्संग्रहस्तु नशङ्क्यः, तस्यघटानुगुणत्वाच्छब्दस्यचानुगुणत्वात् । नन्वाकाशत्वस्य शब्दाश्रयत्वरूपत्वेस्वीकृतेघटम्प्रति कारणत्वं स्यादेवेति चेन्न, तथापि वक्ष्यमाणपञ्चमान्यथासिद्धेन तस्य ग्रहणात् । चतुर्थं यथा, यत्कार्यजनकम्प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यम्प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यम्प्रत्यन्यथासिद्धत्वम्, यत्कार्य जनकम्प्रतीत्यत्र फलानुगुणं यत्कार्यम्प्रतीत्यर्थः, तेन तृतीयेन नास्य संग्रहः, तथा च घटकार्यजनकं कुलालम्प्रति कुलालपितुर्जनकत्वं गृहीत्वैवघटम्प्रति जनकत्वेऽन्यथासिद्धत्वम् । ननु कुलालपितुरपिकुलालत्वात्कुलालमात्रस्य घटम्प्रति कारणत्वात्कथं तस्यान्यथासिद्धत्वमिति चेन्न । कुलालत्वेन तस्य ग्रहणे घटम्प्रति कारणत्वेऽपि तम्प्रति कुलालपितृत्वेनतत्वे तस्यान्यथासिद्-

स्यात् । पञ्चमञ्चावश्यक्लृप्तनियतपूर्ववर्तिभिन्नत्वं, यथाघटप्रतिरासभादिः । यों व्यक्तिप्रतिरासभस्यनियतपूर्ववर्तित्वमस्त्येवस तत्रकारणं तत्कथं तस्यान्यथासिद्धत्वमिति चेन्न,घटत्वावच्छिन्नप्रतिक्लृप्तदण्डादिनैव तस्याप्युत्पत्तिसिद्धौतस्यापि तत्र कारणत्वेमानाभावात्–ननु पाकजरूपप्रागभावेनगन्धोत्पत्तिसम्भवे रूपप्रागभावेन गन्धप्रागभावस्यान्यथासिद्धत्वं स्यात्तत्ररूपप्रागभावस्यानश्यक्लृप्तनियतपूर्ववर्तित्वात्, नच •यत्कारणत्वमवश्यक्लृप्तमित्युक्त्या निर्वाहस्तथा सति कारणत्वशरीरे कारणत्वे आत्माश्रयादिरिति चेन्न, लघुनियतपूर्ववर्तित्वरूपस्यावश्यक्लृप्तस्य विवक्षितत्वात् । नन्वन्यत्रक्लृप्तेति वक्तव्येऽवश्यपदं किमर्थमितिचेत्महत्वस्यानेकद्रव्यत्वादन्यत्रक्लृप्तनियतपूर्ववर्तित्वाभावेन महत्वेनानेकद्रव्यत्वस्यान्यथासिद्ध्यभाव प्रसङ्गात् । अनेकद्रव्यत्वञ्च नतावदनेकद्रव्यसमवेतत्वं, तथासति परमाणुद्वयारब्धद्व्यणुके तत्वेन तत्प्रत्यक्षापत्तेः । नच तस्य समवेतसमवेतत्व रूपत्वे द्व्यणुकस्यातथात्वे न प्रत्यक्षमिति वाच्यम् । उक्तरूपानेकद्रव्यत्वाभावेनात्मनोऽप्रत्यक्षत्वापत्तेरिति चेन्न, अणुभिन्नद्रव्यत्वरूपतत्स्वीकारेणादोषात् । न च निरुक्तरूपानेकद्रव्यत्वमेव प्रत्यक्षे कारणमस्तु तेन महत्वस्यान्यथासिद्धत्वं कुतो नेति चेन्न । महत्वस्यकारणत्वे महत्वत्वस्यकारणतावच्छेदकत्वे तस्य जातिरूपत्वेन लाघवात् । ननूक्तरूपपञ्चमान्यथासिद्धेनैव सर्वसंग्रहात्तेषां भेदेनोपादानमनर्थकमितिचेदिष्टापत्तेरित्यन्यत्र विस्तरः ।

## ( १६ ) असमवायिकारणञ्च कस्यसाधर्म्यम् ?

मूले " गुणकर्ममात्रवृत्तिज्ञेयमथाप्यसमवायि हेतुत्वम् " इत्युक्तम्, तत्र मात्रपदस्य कार्त्स्न्यार्थकतया यावतां गुणकर्मणामसमवायिकारणत्वमायातं तच्चायुक्तम्, आत्मविशेषगुणानां सर्वत्रासमवायिकारणाभावस्य प्राङ्निरूपितत्वादिति चेन्न, साधर्म्यस्य वैधर्म्ये, गुणकर्मपदस्य तद्भिन्ने लक्षणायामसमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यमित्यर्थे

तात्पर्येणादोषात् । ननु साधर्म्यप्रकरणे वैधर्म्यकथनमयुक्तं गुणकर्मणोस्तद्भिन्ने लक्षणाप्ययुक्तेति चेन्न, असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्वस्य विवक्षितत्वात् । असमवायिकारणे गुणकर्मणी, तद्वृत्तिः सत्ताभिन्नजातिः गुणत्वकर्मत्वरूपा तद्वत्वं गुणादीनाम् । सत्ताभिन्नद्रव्यत्वरूपजातिमादाय द्रव्येऽतिव्याप्ति वारणाय वृत्यन्तम् । सत्तामादाय तत्रैवातिव्याप्ति वारणाय सत्ताभिन्नेति, द्रव्यगुणान्यतरत्वरूपधर्ममादाय तत्रैवातिव्याप्तिवारणाय जातिपदम् । नत्वेवं कालिकसम्बन्धेनासमवायिकारणे गुणादौ वर्तमाना सत्ताभिन्नाद्रव्यत्वजातिरस्तीति तामादाय पुनस्तत्रातिव्याप्तिरिति चेन्न, वृत्तित्वस्य समवायेन विवक्षितत्वात् । यद्यप्यसमवायिकारणसमवेतसत्ताभिन्न जातिर्गुणत्वादिरूपा सा च कालिकेन द्रव्येप्यस्ति, तथाप्यसमवायिकारणसमवेतसत्ताभिन्नजातेरपि समवायेनाधिकरणस्य विवक्षणान्नदोष इति शम् ।

(१७) आश्रितत्वं कस्य साधर्म्यं तस्य समवायेनग्रहे समवायाभावयोरव्याप्तिः—वृत्तित्वसामान्यविवक्षायां नित्यद्रव्येष्वतिव्याप्तिरितिशङ्का परिहरणीया ?

अत्रेदं तात्पर्यं "अन्यत्रनित्यद्रव्येभ्य आश्रितत्वमिहोच्यते" इति मूलम्, तत्रेहपदस्य पूर्वपरामृष्टद्रव्यार्थकत्वे नित्यद्रव्यव्यतिरिक्त द्रव्यत्वं लक्ष्यतावच्छेदकं लभ्यते तदयुक्तम्, गुणादावप्याश्रितत्वस्य सत्वादिति चेद्वेदान्तिमते नित्यज्ञानस्याप्यनाश्रितत्वाङ्गीकारेण तत्रातिव्याप्ति वारणशङ्कानिरासाय न्यायसिद्धान्तइत्यर्थकस्य तत्रेहशब्दस्य सत्वात्, तथा च नित्यद्रव्यभिन्नत्वमेव लक्ष्यतावच्छेदकं सिद्धम्; तथा च नित्यद्रव्यभिन्नपदार्थजातस्याश्रितत्वंसाधर्म्यं लब्धम् । नन्वेवं गगनं सर्वदैवास्तीति प्रतीते नित्यद्रव्येष्वपिकालिकसम्बन्धेनाश्रितत्वसत्वात्तत्रातिव्याप्तिरिति चेन्न, समवायसम्बन्धेनाश्रितत्वस्य विवक्षितत्वेन कालिकादिसम्बन्धस्याग्रहणात् । नन्वेवं समवायाभावयोरव्याप्तिः समवायस्य स्वात्मकस्वरूपसम्बन्धेनाभावस्यापि स्वरूपसम्बन्धेनाश्रितत्वादिति चेन्न । सर्वाधार-

तानियामककालिकसम्बन्धातिरिक्तसम्बन्धमात्रस्य ग्रहणेनादोषात्। नन्वेवं संयोगेन परमाणोरपि वृत्तेस्तत्रातिव्याप्तिरिति वाच्यम्, पतनप्रतिबन्धकसंयोगस्यैव वृत्तिनियामकत्वेन तत्संयोगस्य वृत्त्यनियामकत्वेनादोषादित्यनवद्यम् ।

( १८ ) क्षितिर्जलं तथातेज इत्यादि कारिका व्याख्येया ?

पृथिव्यप्तेजोवायुमनसां परत्वापरत्वमूर्तत्वक्रियावेगवत्त्वं साधर्म्यम् । ननु मूले क्रियापदस्यसत्वात् "धात्वर्थोहि क्रियाज्ञेयो भाव इत्यभिधीयते" इति इर्युक्तेः क्रियापदस्य धात्वर्थे प्रसिद्ध्या तत्रातिप्रसङ्ग इति चेन्न , अत्र क्रियापदेन कर्मणो ग्रहणात् । ननु यत्र घटादौ परत्वन्नोत्पन्नं तत्राति व्याप्तिः , नच द्रव्योत्पत्तिद्वितीयक्षणे गुणोत्पत्त्यङ्गीकारेण गुणान्तरस्येव तत्र परत्वादेरुत्पत्तिर्नोचितैवेति वाच्यम्, यतः दैशिककालिकपरत्वापरत्वयोरपेक्षाबुद्धिजन्यत्वेनापेक्षाबुद्धिरेव यत्रनोत्पन्ना सुतरां तत्र तयोरभावस्तथा च तत्राव्याप्तिरिति चेन्न , परत्वापरत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्वस्य ग्रहणेनादोषात् । यत्र घटादौ परत्वादिकमुत्पन्नंस परत्वाद्यधिकरणं तद्वृत्तिद्रव्यत्वव्याप्यजातिः पृथिवीत्वं ,तद्वत्वंतस्यापि, आत्मन्यतिव्याप्तिवारणाय परत्वादिसामानाधिकरण्येति , तत्रैव सत्तां गृहीत्वातिव्याप्तिवारणार्थं द्रव्यत्वव्याप्येतिजातेर्विशेषणम् । नन्वेवं द्रव्यत्वव्याप्यजातित्वं द्रव्यत्वेऽपि तादृशजातिमत्वमाकाशेऽतिव्याप्तमिति चेन्न , द्रव्यत्वान्यद्रव्यत्वव्याप्यजातिमत्वस्यविवक्षितत्वात् । मूर्तत्वञ्चापकृष्टपरिमाणवत्वम् । नन्वेवं परमाणुपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात्तत्राव्याप्तिरिति चेन्न । अविभुवृत्तिपरिमाणवत्वमित्यर्थेनादोषात् । एवंकर्मवत्त्वमपि कर्मसमानाधिकरणद्रव्यत्वव्याप्य जातिमत्वम् । एवं वेगवत्त्वमपि बोध्यमिति दिक् ।

( १९ ) भूतत्वं केषां साधर्म्यं तच्च किम् ?

"क्षित्यादि पंच भूतानी" ति मूलम् । पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वं साधर्म्यम् । तत्वञ्च बहिरिन्द्रियग्राह्यविशेष गुणवत्वम्, बहि-

रिन्द्रियाणि श्रोत्रादीनि तद्ग्राह्यविशेषगुणाः शब्दादयस्तद्वत्त्वमाकाशादीनाम् , आत्मन्यतिव्याप्तिवारणाय बहिष्पदम् । नन्वेवं पूर्वदिने यो घटो दृष्टस्तस्यैव परदिने प्रत्यक्षे ज्ञातोघट इत्याकारकं ज्ञानंभवति तत्र घटांशे चक्षुषःसंयोगः सन्निकर्षस्तज्ज्ञानांशे च चक्षुषःस्वसंयुक्तमनःसंयुक्तात्मसमवायः सन्निकर्षः, एवञ्च घटतज्ज्ञानयोश्चाक्षुषमेव ज्ञानं लौकिकालौकिकम् , घटांशेआद्यम्, ज्ञानांशे द्वितीयम्, लौकिकप्रत्यक्षन्तु न ज्ञानस्य षड्विधसन्निकर्षजन्यत्वाभावात् , तथाच बहिरिन्द्रियं चक्षुः तद्ग्राह्यविशेषगुणोघटज्ञानम् तद्वत्त्वमात्मनः, एवञ्च तत्रातिव्याप्तिरिति चेन्न, तत्र बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयतावद्विशेषगुणवत्त्वस्य विवक्षितत्वेनादोषात् । नन्वेवं प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिरिति चेन्न , बहिरिन्द्रियजन्यलौकिकस्वरूपयोग्यप्रत्यक्षविषयतावच्छेदकधर्मवद्विशेषगुणवत्त्वस्य विवक्षितत्वेनादोषात् । तथाहि घटादिगतरूपनिष्ठबहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयतावदवच्छेदकोधर्मोरूपत्वादिस्तद्वान् विशेषगुणोरूपादिस्तद्वत्त्वं परमाण्वादेरपि । ननु निरुक्तलक्षणे विशेषपदमधिकं गुणवत्त्वमात्रेणेष्टसिद्धेरिति चेन्न , बहिरिन्द्रियग्राह्यजातीयसंयोगादिमतिकालादावतिव्याप्तिनिरासाय तदुपादानात् । संयोगस्य तु न विशेषगुणत्वम्--बुद्ध्यादिषट्कमित्यादिना बुद्ध्यादेरेवविशेषगुणत्वस्य वक्ष्यमाणत्वात् । नन्वेवं निरुक्तविषयतावच्छेदकधर्मवद्यत्तद्वत्त्वमित्येवोच्यताम्, विशेषगुणवत्त्वंकिमर्थमितिचेत्कर्मत्वरूपतादृशधर्मवत्कर्मेति, तद्वति मनस्यतिव्याप्तिवारणाय तदिति गृहाण, ननु परमाण्वादेः संग्रहाय स्वरूपयोग्यत्वनिवेशेन परमाणुरूपादेर्योग्यत्वे तत्प्रत्यक्षापत्तिरिति चेन्न, लौकिकविषयतयाद्रव्यसमवेतप्रत्यक्षे समानाधिकरणसम्बन्धेन महत्त्वस्य कारणतया तत्र तेन सम्बन्धेन तस्याऽभावेन तत्प्रत्यक्षाभावात् । नन्वेवं चक्षुरिन्द्रियादिगतरूपादिविशेषगुणानामनुद्भूतत्वेन बहिरिन्द्रियग्रहणायोग्यत्वाच्चक्षुरादावव्याप्तिरिति चेन्न , लक्षणेस्वरूपयोग्यत्वं विहाय बहिरिन्द्रियजन्यलौकिक प्रत्यक्षविषयगुणत्वन्यूनवृत्तिजातिमद्यत्तद्वत्त्वविवक्षायां

तथाविधरूपत्वादिजातेश्चक्षुरादिरूपेऽपिसत्त्वेन दोषाभावात् । नन्वेवं-गौरवमिति चेदात्मावृत्तिविशेषगुणवत्त्वमेव तत्त्वम् , आत्मन्यतिव्या-प्तिवारणाय वृत्यन्तम् , दैशिकपरत्वमादाय मनस्यतिव्याप्तिवारणाय विशेषेति सर्वं सुपुष्कलम् ।

## ( २० ) आकाशात्मनां किं साधर्म्यम् ?

"अथाकाशशरीरीणाम् अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते" इति मूलम् । तेनाकाशात्मनामव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिक-विशेषगुणवत्त्वञ्चसाधर्म्यंलभ्यते । अव्याप्यवृत्तित्वञ्च स्वसमानाधिकरणा-त्यन्ताभावप्रतियोगित्वम् , स्वंशब्दस्तत्समानाधिकरणात्यन्ताभावएतद्दे-शावच्छिन्नाकाशे शब्दोनास्तीत्याकारकस्तत्प्रतियोगित्वंशब्दे, इति शब्द-स्याव्याप्यवृत्तित्वमाकाशे , एवं ज्ञानस्याप्यात्मनोऽव्याप्यवृत्तित्वम् , शरीरावच्छेदेनैवात्मनि ज्ञानादेः सत्त्वात् , घटाद्यवच्छेदेनतदभावादात्मनश्च विभुत्वात् । तत्राव्याप्यवृत्तिगुणवत्त्वमात्रस्वीकारेसंयोगादेरपि पृथिव्या-अव्याप्यवृत्तित्वात्तत्रातिव्याप्तिरतोविशेषपदम् । विशेषगुणत्वन्तु न संयोगादेः "बुद्ध्यादि षट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः । अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः " इतिवक्ष्यमाणेन बुद्ध्यादेरेव तत्त्वात् । पृथिव्यामतिव्याप्तिवारणायाव्याप्यवृत्तिरिति गुण-विशेषणम् , तत्ररूपादेर्विशेषगुणस्यसत्त्वात् । ननु रूपादीनामपिकालिका-दिनाऽव्याप्यवृत्तित्वात्कथंतद्वारणमिति चेन्न , दैशिकाव्याप्यवृत्तित्वस्यविव-क्षितत्वात् । न चेश्वरगुणानां व्याप्यवृत्तित्वात्तत्राव्याप्तिरितिवाच्यम् , अव्या-प्यवृत्तिगुणत्वव्याप्यजातिमत्त्वस्यग्रहणेनादोषात् अव्याप्यवृत्तिर्गुणो जीवा-त्मनिज्ञानंतद्वृत्तिगुणत्वाव्याप्यजातिर्ज्ञानत्वं तद्वत्त्वमीश्वरस्येतिसमन्वयः । नच स्वमतेक्षणिकपदार्थानङ्गीकारात् क्षणिकविशेषगुणवत्त्वरूपं साधर्म्यंकथ-नमयुक्तमितिवाच्यम् , तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वस्य क्षणिकत्वेना-भिधानात् । यद्यपि तन्त्रान्तरेशब्दज्ञानयोर्नित्यत्वं तथापिस्वमतेयोग्यविभु-

विशेषगुणानांस्वोत्तरवर्त्तिविशेषगुणनाश्यत्वेन प्रथमशब्दस्यद्वितीयेन द्वितीयस्यतृतीयेन नाशात्, निरुक्तक्षणिकविशेषगुणवत्त्वमाकाशस्य । नन्वेवं-स्वत्वस्य तत्तद्व्यक्तित्वरूपत्वेतत्तद्व्यक्तिनाशम्प्रति तत्तद्व्यक्तित्वेनकारणत्वेऽनन्तकार्यकारणभावकल्पनेगौरवमिति चेन्न, यत्रप्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशस्तत्रस्वसामानाधिकरण्यस्वाव्यवहितपूर्ववर्तित्व सम्बन्धनयोग्यविभुविशेषगुण इति कार्यकारणभावस्वीकारात् । नच प्रायश्चित्तादिनाऽधर्मनाशेव्यभिचार इति वाच्यम्, लौकिकप्रत्यक्षात्कारविषयनिर्विकल्पान्यतररूपयोग्यत्वस्य तत्राभावात्, पूर्वरूपेण द्वितीयरूपनाशे व्यभिचारवारणायविभुपदम्, संयोगनाशे तद्वारणाय विशेषेति । नन्वेवं कदाचिद्रूपादीनामपि तृतीयक्षणेनाशसम्भवात् क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति चेन्न, चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्वस्यतेनविवक्षणात् । तथाहि चतुःक्षणवृत्तिजन्यंरूपादि, तदवृत्तिर्जातिः शब्दत्वज्ञानत्वादिरूपा तादृशजातिमान् शब्दज्ञानादिविशेषगुणस्तद्वानाकाशादिरितिसमन्वयः । ननु त्रिक्षणवृत्तित्वंविहाय किमिति चतुःक्षणवृत्तित्वोपादानम्, न च त्रित्वचतुष्ट्वयोर्लाघवगौरवाभावे तदुपादाने इच्छैवनियामिकेति वाच्यम्, त्रित्वेप्रथमोपस्थितत्वरूपलाघवसंभवादिति चेन्न, अपेक्षाबुद्धेस्त्रिक्षणवृत्तित्वेन ज्ञानत्वस्यासंग्रहात्तद्वत्यात्मन्यव्याप्यापत्तेः । लक्षणे वृत्यन्तनिवेशात्, रूपत्वजातिमादाय रूपत्वजातिमद्विशेषगुणवद्घटादावतिव्याप्तेरभावः । नन्वेवं चतुष्पदोपादानेन रूपत्वादेर्व्युदासेऽपेक्षाबुद्धिगतज्ञानत्वमादायदोषोऽपि वारितएव तत्किमिति जन्यपदोपादानेनेति चेन्न, ईश्वरज्ञानस्यनित्यतया चतुःक्षणवृत्तित्वात् तदवृत्तिज्ञानत्वमादायात्मन्यव्याप्यापत्तेः, जन्योक्तौ तु नदोषस्तज्ज्ञानस्यनित्यत्वात् । वस्तुतस्तु मूले शरीरिपदोपादानेन जीवात्मनामेव साधर्म्यं प्रतीयतेऽतोजन्येति न देयम् । नन्वेवमीश्वरज्ञानेज्ञानत्वसत्वात् तस्य चतुःक्षणवृत्तित्वाज्जीवात्मन्यव्याप्तिरिति चेन्न, द्वेषत्वादिमादायलक्षणसमन्वयसम्भवात् । परममहत्वस्य चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्गुणत्वात्तदादाय कालादा-

वतिव्याप्तिवारणाय विशेषपदम्। ननु जन्यपदानुपादानेपरममहत्वस्य चतुःक्षणवृत्तित्वाभावकालादावतिव्याप्तिरिति चेन्न। द्वित्वादीनां चतुःक्षणे-नाशाभ्युपगमात्तेषां निरूक्तजातिमद्विशेषगुणत्वात्तदादाय तत्रातिव्याप्ति-वारणायविशेषपदस्यावश्यकत्वात्। वस्तुतस्तुप्रथमोपस्थितत्वात्त्रिक्षण-वृत्तित्वमेव वाच्यम्, इच्छात्वादिकमादायलक्षणसमन्वयात्। वस्तुतस्तु कस्यचिन्मते शब्दस्यचतुःक्षणवृत्तित्वं पक्षतायामुक्तं तथाच, चक्षुःक्षण-वृत्तितच्छब्दावृत्तिजातिमद्विशेषगुणवत्त्वमेव सम्यगिति सर्वं चतुरस्रमिति-शिवम्।

## (२१) रूपवत्वादिकं केषां साधर्म्यम्?

"रूपत्वद्द्रवत्वप्रत्यक्ष योगिनः प्रथमास्त्रयः" इत्युक्तम्, तेन पृथि-व्यप्तेजसां रूपवत्वंद्रवत्ववत्वं प्रत्यक्षविषयत्वञ्च साधर्म्यम्। ननु चक्षुरादौ भर्जनकपालस्थवह्नेरुष्मणश्चरूपवत्वन्नास्ति, सहसा तेषां रूपवत्वाभ्युपगमेतु चाक्षुषप्रत्यक्षापत्तिस्तेषां स्यादिति चेन्न। चक्षुरादिकं रूपवत् तेजस्त्वात् प्रदीपवदित्यनुमानेन तेषां रूपवत्वेऽपि तदीयरुपस्यानुद्भूतत्वेन प्रत्यक्षा भावात्। एवं वाय्वानीतः पार्थिवादिभागोरूपवान् पृथ्वीदित्वाद्व घटादिवत्-इत्याद्यनुमानेन वाय्वानीतपृथ्वीजलतेजोभागानां रूपवत्वं बोध्यम्। ननु घटादौ पिण्डीभूतेसुवर्णे द्रवत्ववत्त्वमव्याप्तमिति चेन्न, द्रवत्ववद्वृत्तिद्रव्य-त्वव्याप्यजातिमत्त्वस्य विवक्षणेनादोषात्। द्रवत्ववद्व घृतं तद्वृत्तिद्रव्य-त्वव्याप्यजातिः पृथिवीत्वं तद्वत्वं घटादावेवंद्रुतसुवर्णमादाय तत्र सम-न्वयः। ननु प्रत्यक्षविषयत्वं परमाणवादेनास्ति तत्र महत्वाभावात्-इति तत्राव्याप्तिः, रूपादौ चातिव्याप्तिस्तेषांप्रत्यक्षाविषयत्वादिति चेन्न। चाक्षुषलौकिकप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्वस्यग्रहणेनादोषात्। चाक्षुषलौकिकप्रत्यक्षविषयोघटादिस्तद्वृत्ति द्रव्यत्वव्याप्यजातिः पृथिवीत्वं तद्वत्वं परमाण्वादौ। घटोवायुमानित्यत्र वाय्वंशे ज्ञानलक्षणप्रत्यासत्या घटविशेष्यकचाक्षुषविषयवायुवृत्तिद्रव्यत्वव्याप्यवायुत्वजातिमादाय वाया-चतिव्याप्तिवारणाय लौकिकेति। द्रव्यत्वव्याप्येत्यत्रद्रव्यत्वान्यद्रव्यत्वव्या-

॰प्यत्वं विवक्षितम्, तेन तद्व्याप्यद्रव्यत्वजातिमादाय न तत्रैवातिव्याप्तिरिति ध्येयम् । इति साधर्म्यं प्रकरणम् ॥

## (२२) निर्दुष्टं पृथिव्या लक्षणं किम् ?

तत्र क्षितिर्गन्धहेतुरिति मूलम्, तेन गन्धहेतुत्वं तल्लक्षणं लब्धम् । ननु कार्यमात्रं प्रति कालादेर्हेतुत्वेन तत्रातिव्याप्तिरिति चेन्न, गन्धसमवायिकारणत्वस्य तेनाभिधानात् । ननु सुरभ्यसुरभिकपालारब्धनिर्गन्धघटे तथाप्यव्याप्तिरिति चेन्न, गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्, जलादावतिव्याप्तिवारणाय वृत्यन्तम्, तत्रैव सत्तामादाय तद्वारणाय जातेर्द्रव्यत्वव्याप्यत्वं विशेषणम्, जलपृथिव्यन्यतरत्वमादाय
तद्वारणाय जातेर्द्रव्यत्वव्याप्यत्वं विशेषणम्, जलपृथिव्यन्यतरत्वमादाय
तत्रैवातिव्याप्तिवारणाय जातिपदम् । नन्वेवं कालिकसम्बन्धेन गन्धवति समवायसम्बन्धावच्छिन्नवृत्तित्ववज्जलत्वादिमति पृथिवीनिरूपिततत्सम्बन्धावच्छिन्नवृत्तित्ववज्जलत्वादिमति वा जलादावतिव्याप्तिरिति चेन्न, गन्धवत्ववृत्तित्वयोः समवायेन विवक्षितत्वात् । न चान्यत्र गन्धाभावेन गन्धवत्वमात्रलक्षणेनापत्यभावे हेतुपदं व्यर्थमिति वाच्यम्, समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नक्षितिनिष्ठकारणतावच्छेदकतया क्षितित्वजातेः सिद्ध्यर्थं हेतुपदोपादानात् । नन्वनुगतप्रतीत्यैव क्षितित्वजातिसिद्धौ किमिति प्रकारान्तरेण तत्साधनमिति चेन्न, परमाण्वादौ तथाप्रतीतेरभावेन तत्साधारणतत्साधनप्रयासस्य साफल्यात्, गन्धत्वावच्छिन्नं प्रति हेतुत्वानङ्गीकारे गन्धत्वावच्छिन्नस्य नियतकारणानियम्यत्वापत्तेश्च । ननु गन्धवत्वस्य तल्लक्षणत्वे गन्धशून्ये पाषाणादावव्याप्तिरिति चेन्न, पाषाणादावपि पृथिवीत्वेन गन्धानुमानात् । पाषाणस्य पृथिवीत्वाभावेनालक्ष्यत्वादेव तत्र गन्धवत्वलक्षणं नाव्याप्तमिति चेन्न । पाषाणस्य पृथिव्यन्यद्रव्यताया अपसिद्धान्तत्वेन तस्यापि लक्ष्यत्वात् । ननु तत्र गन्धसत्त्वे तदुपलब्धिः

कुतो नेति चेन्न, तत्र गन्धस्यानुद्भूतत्वेनानुपलम्भात् । ननु पाषाणे पृथिवीत्वमेव नास्ति कुतस्तेन तत्र गन्धसत्तानुमितिरिति चेन्न, पाषाणे पृथिवीत्वानङ्गीकारे पाषाणभस्मनि गन्धानुपलब्धिप्रसङ्गात् । ननु पाषाण भस्मनि गन्धोपलब्ध्या तत्र पृथिवीत्वमस्तु, पाषाणे तदनुपलब्ध्या तत्रतत्सत्वे माना-भाव इतिचेन्न, यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्त्या महापटध्वंसजन्ये खण्डपटे महापटोपादानोपादेयत्वस्य दृष्टत्वेन च भस्मारम्भकपाषाणारम्भकपरमाणूनामेकजातीयत्वात्पाषाणारम्भकपर-माणुषु पृथिवीत्वसिद्धौ पाषाणेऽपि तत्सिद्धेः । नन्वेवं दुग्धध्वंसजन्ये दध्नि दुग्धावयवजन्यत्वस्वीकारे दध्नोऽपि दुग्धत्वापत्तिस्तथा च दुग्धावय-वैर्दध्नो जन्यत्वाभ्युपगमे दध्नि व्यभिचार इति चेन्न, दध्नोद्व्यणुकातिरिक्त दुग्धजन्यत्वस्वीकारात् । नच वाच्यम् दध्नोऽपि दुग्धत्वापत्तिस्तत्पर-माणुजन्यत्वात्, दुग्ध-परमाणौ दुग्धत्वाभावात् । न च परमाणौ दुग्धत्वा-भावे मानाभाव इति वाच्यम्, द्रव्यत्वव्याप्यव्याप्यजातेः परमाणुवृ-त्तित्वाभावात् । नन्वत्र नियामकाभाव इति चेत्, दधिद्व्यणुकस्य दुग्धपरमाणुजन्यत्वेन दध्नोदुग्धत्वापत्तिः, उभयोरपि परमाणुवृ-त्तित्वे दधित्वदुग्धत्वयोः सांकर्यप्रसङ्गात् । अत्रेमे प्रयोगाः १ पाषाण भस्मपाषाणोपादानोपादेयम्, पाषाणध्वंसजन्यत्वात् , यद्द्रव्यंयद्द्रव्य-ध्वंसजन्यंतत्तदुपादानोपादेयम्, महापटध्वंसजन्यखण्डपटवत्—अनेन पाषा-णपरमाणुषु भस्मारम्भकत्वं सिद्धम् । २ पाषाणपरमाणवः पार्थिवाः, गन्धवद्भस्मारम्भकत्वाद् घटाद्यारम्भकपरमाणुवत्, अनेन पाषाणपर-माणुषु पृथिवीत्वंसिद्धम् । ३ पाषाणः पार्थिवः पार्थिवपरमाणुजन्यत्वा-द्घटवत् । ततश्च ४ पाषाणो गन्धवान् पार्थिवत्वात् पुष्पवत्, इत्येवं प्रका-रेण पाषाणे पृथिवीत्वगन्धवत्वयोः सिद्धिरित्यन्यत्र विस्तरः।

( २३ ) क्षितेर्नानारूपवत्व लक्षणेऽव्याप्तिः परिहरणीया ?

कारिकायां नानारूपवतीमतेत्युक्तम्—तदयुक्तम् । तस्या नानारूपवत्व

लक्षणाङ्गीकारे नैकरूपाभावोयत्र तत्राव्याप्तेरिति चेन्न, रूपद्वयवद्वृत्तिः द्रव्यत्वव्याप्यजातिमत्त्वस्य तेन ग्रहणेनादोषात् । तथाहि वैशेषिकाः पृथिवीपरमाणौ प्रथमंरूपनाशं तदनन्तरं रूपान्तरोत्पत्तिञ्च मन्यन्ते नत्ववयविन्यवयवेनावष्टब्धे तस्मिन्तेजःप्रवेशासम्भवात् प्रवेशेवाघटादौछिद्र प्रसङ्गात्, तथाच तेजः क्रिययापरमाण्वन्तभङ्गो पाकेन परमाणौ रूपान्तरोत्पत्तौ पुनर्घटोत्पत्तिः, सोऽयमितिप्रत्यभिज्ञातु सादृश्यादिति तेषां राद्धान्तः । नैयायिकास्तु अवयविन्यवयवे–उभयत्रापिपाकमिच्छन्ति तथाचाद्यमते परमाणुं गृहीत्वा, द्वितीये घटादिकमादाय लक्षणसमन्वयः । जलत्व जातिमादाय जलेऽतिव्याप्तिवारणाय वृत्यन्तम्, द्रव्यत्वव्याप्यजलपृथ्व्यन्यतरत्वमादाय तत्रैवातिव्याप्ति वारणाय द्रव्यत्वव्याप्येति । नन्वेवमपेक्षाबुद्धिविशेषविषयत्वरूपघटितत्वेन निरुक्तलक्षणे गौरवमितिचे द्रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमेवतदिति गृहाण, समन्वयपदकृत्ये पूर्ववज्ज्ञेये।

## ( २४ ) परमाणुसमूहस्य घटादिरूपत्वे को दोषः ?

अयम्भावः "नित्याऽनित्या च सा द्वेधा, नित्यास्यादणुलक्षणा, अनित्यातु तदन्यास्यात्सैवावयवयोगिनी" इति मूलम् । पृथिवी द्विधा, नित्याऽनित्या च, तत्र परमाणुरूपा सा नित्या, द्व्यणुकादिरूपाऽनित्या, अनित्यैव पृथिव्यवयविनीति तदर्थः । अथावयवकदम्बातिरिक्तावयविनः सत्त्वे किम्मानम्, न चायं घट इति प्रतीतिरेव तत्र मानमिति साम्प्रतम्, परमाणु समूहैरेव तत्प्रतीत्युपपत्तेः, नचायंघट इति प्रतीतेः परमाणुसमूहविषयकत्वे मृत्पिण्डेऽपितादृशप्रतीतिः स्यात्तत्रापि तत्सत्वादिति वाच्यम्, विलक्षणसंयोगविशिष्टपरमाणूनां तत्तद्विलक्षणप्रतीतिजनकत्वात् । यद्यपि परमाणूनामप्रत्यक्षत्वाद्द घटादेरपि प्रत्यक्षानापत्तिस्तथाप्येकस्यतस्याप्रत्यक्षत्वेऽपि तत्पुञ्जस्य तत्सम्भवः, यथा दूरस्थस्यैकस्य केशस्य प्रत्यक्षाभावेऽपि तत्समूहस्य प्रत्यक्षम् । ननु परमाणूनामनेकत्वा दणुत्वाच्च, एकोघटस्थूल इति बुद्धिर्नस्यादिति चेन्न, धान्यनिष्ठसंख्याविशेषरूपधान्यसमूहस्यैक-

त्वादेकधान्यसंयुक्तापरधान्यसंयुक्तान्यधान्यप्रतियोगिकसंयोगस्यमहत्त्वात्मकतयाचैको महान् धान्यराशिरिति वदेकोघटस्थूल इति बुद्धेरप्युपपत्तेरिति चेन्न । स्वभावतोऽयोग्यानां परमाणूनां परस्परसंयोगमात्रेण योग्यत्वाभावे तत्समूहरूपघटादेरप्यप्रत्यक्षत्वप्रसङ्गात् । दूरस्थैककेशाप्रत्यक्षेऽपि तत्समूहप्रत्यक्षवदत्रापि स्यादिति चेन्न, सन्निधाने तस्यैवैकस्यकेशस्य प्रत्यक्षदर्शनात्, तत्रदूरत्वस्य प्रतिबन्धकत्वेन स्वाभाविकातीन्द्रियत्वाभावेन दृष्टान्तवैषम्यात् । नच क्षणभङ्गवादिनां मते परमाणूनामुत्पत्तिस्वीकारेण घटादिप्रतीतिकालेदृश्यपरमाणुपुञ्जस्योत्पन्नत्वात्प्रत्यक्षसम्भव इति वाच्यम्, अदृश्यपरमाणूनां दृश्यपरमाणूत्पादकत्वाभावात् । न चादृश्यस्य दृश्योत्पादकत्वमिष्टमेवेति वाच्यम्, चक्षुरूपादिसंततेरपि कदाचित् चाक्षुषत्वप्रसङ्गात्, अथातितप्ततैलादावदृश्यवह्निनादृश्यवह्न्युत्पत्तिः कथं, तत्रादृश्येन दृश्यानुत्पत्तेरिति चेन्न, तत्रापि तदन्तर्वर्तिसूक्ष्मदृश्यदहनावयवैः स्थूलदहनोत्पत्तिस्वीकारात्, ननु तार्किकमते द्व्यणुकस्याप्यदृश्यत्वेन कथन्तेन दृश्यत्रसरेणोरुत्पत्तिरिति चेन्न, महत्त्वोद्भूतरूपालोकसंयोगकारणकलापसत्त्वे दृश्यत्वस्य तदभावेऽदृश्यत्वस्यस्वीकारेण त्रसरेणोर्महत्त्वात्प्रत्यक्षत्वस्य द्व्यणुकादेस्तदभावेन तदभावस्यस्वीकारात्, परस्परवियुक्तपरमाणूनां महत्त्वाभावेन प्रत्यक्षत्वाभावेऽपि संयुक्तानां तेषां प्रत्यक्षत्वं स्यादेव, नच महत्त्वाभावः प्रत्यक्षत्वबाधक इति वाच्यम्, तत्रान्योन्यविजातीयसंयोगरूपमहत्त्वस्यप्रत्यक्षसाधकत्वात्, ननुपरमाणूनां नित्यत्वाद् घटादीनामपि नित्यत्वापत्तिरिति चेन्न, मन्मते पदार्थमात्रस्यैव क्षणिकत्वेन परमाणूनामुत्पत्तिविनाशस्वीकारात्, नच परमाणुपुञ्जे घटत्वाङ्गीकारे कपालाद् घट इति प्रतीत्यनुपपत्तिरिति वाच्यम्, घटवत्कपालस्यापि परमाणुपुञ्जत्वेन पुञ्जात्पुञ्जोत्पत्तिस्वीकारात्, एवञ्चावयविनि मानाभाव इति चेन्न, घटादिप्रतीतेः परमाणुपुञ्जविषयकत्वे गौरवादतिरिक्तकल्पने एव लाघवात्, अत एव तत्प्रत्यक्षमप्युपपद्यते, अन्यथा, यावतामवयवानां चक्षुःसंयोगाद्यभावेन घटं पश्यामीत्यादिप्रतीत्यनुपपत्तिप्रसङ्गःतत्सिद्धौ

तदुत्पत्तिविनाशस्य प्रत्यक्षसिद्धत्वाऽवयविनामनित्यत्वं सिद्धमित्यन्यत्र विस्तरः।

( २५ ) परमाणु सद्भावे का युक्तिः ?

अयम्भावः ÷ निरुक्तरीत्याऽवयविनः सिद्धौ तदवयवानामनन्तत्वेऽनन्तावयवत्वेन मेरुसर्षपयोः साम्यप्रसङ्गात्, द्व्यणुकस्य सावयवारब्धत्वेन महत्वापत्तिप्रसङ्गाच्च क्वचिद्विश्रान्तिकल्पनया विश्रामावधेर्नित्यत्वं सिद्धम्, नच तस्यानित्यत्वमेव किन्नेतिवाच्यम्, तथा सत्यसमवेतभावकार्योत्पत्तिप्रसङ्गे कार्यकारणभावव्यवस्थोच्छेदप्रसङ्गात्। ननु तस्य नित्यत्वसिद्धावप्यणुत्वे किम्मानमितिचेन् महत्परिमाणतारतम्यस्य गगनादौविश्रान्तिवदणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वाभ्युपगमे तद्विश्रामाश्रये परमाणुत्वसिद्धिः, नच त्रसरेणावेव विश्रामः किन्नेति वाच्यम्, त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वाद् घटवदित्यनुमानेन तस्य सावयवत्वात्, हेतौ चाक्षुषपदमात्मनि व्यभिचारवारणाय, घटाभावे तद्वारणायद्रव्यपदम्। न चोक्तानुमितौ चाक्षुषद्रव्यत्वमस्तु सावयवत्वं मास्त्विति युक्तम्, यतः चाक्षुषद्रव्यत्वं यदि सावयवत्वव्यभिचारिस्यात्तदा सावयवत्वव्याप्यानेकद्रव्यत्वव्याप्यापकृष्टमहत्वव्याप्यं न स्यात्, यतः सावयवत्वव्याप्यानेकद्रव्यत्वव्याप्यापकृष्टमहत्वव्याप्यमतो न व्यभिचारीत्यनुकूलतर्कसद्भावात्। ननु तर्हिद्व्यणुक एव विश्रामोऽस्त्विति चेन्न, त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात् कपालवदित्यनुमानेन तस्यापि सावयवत्वात्, नन्वेवंद्व्यणुकावयवाः सावयवाः सावयवद्रव्यारम्भकत्वात्कपालवदित्यनुमानेन परमाणूनामपि सावयवत्वं सिद्धमिति चेन्न, तथा सत्यनवस्थाप्रसङ्गे निरुक्तदोषापत्त्या तस्य नित्यत्वस्वीकारात्। इत्थञ्च परमाणोर्नित्यत्वं चरमावयवत्वञ्चसिद्धम्।

( २६ ) किन्नाम शरीरत्वं तच्च कथन्न जातिः ?

अत्रायमाशयः, अनित्यपृथिव्या विभागोद्देशे देहेन्द्रियविषयभेदेन त्रैविध्यमुक्तम्, तत्र "योनिजादिभवेद्देह" इत्युक्त्या योनिजायोनिजभेदेन

देहस्यापि द्वैविध्यम्, जरायुजाण्डजभेदेन योनिजस्यापि द्वैविध्यम्, तत्र जरायुजं मानुषादीनाम्, अण्डजं सर्पादीनाम्। अयोनिजोऽपि द्विविधः, स्वेदजोद्भिज्जादिशरीरभेदात्, तत्र स्वेदजाः कृमिदंशाद्याः, उद्भिज्जास्तरुगुल्माद्याः, आदिना देवनारक्यादिशरीरपरिग्रहः, देवशरीरस्यायोनिजत्वे "ब्रह्मणो मानसामन्वादयः पुत्रा" इत्यागमप्रमाणम्, योनिं विना न शरीरमित्यागमविरोधस्तु न, तत्र योनिपदस्य कारणमात्रपरत्वात्, नन्वेवं मानुषादिशरीराणां पार्थिवत्वे किम्मानम् दृष्टक्षितेर्वैधर्म्यादिति चेन्न, गन्धशुक्लेतररूपवत्वस्यैव तत्र प्रमाणत्वात्, नच तत्र स्वेदोष्मादेरप्युपलब्धेर्जलीयादिकमेव किन्नेति वाच्यम्, एवं सति जलत्वपृथिवीत्वादिना सांकर्य्ये तेषां जातित्वाभावप्रसङ्गात्, तथाहि जलत्वाभावसमानाधिकरणं क्षितित्वं घटादौ, क्षितित्वाभावसमानाधिकरणं जलत्व गङ्गोदकादौ, तयोरेकत्रसमावेशो मानुषादिशरीरे इति साङ्कर्य्यम्, ननूक्तसाङ्कर्य्यात्पृथिव्यादिसमुदितजन्यत्वं शरीरस्य माभूत् किमिति तत्पार्थिवमेव न जलीयादिकमिति चेन्न, स्वेदादेर्विनाशेऽपि शरीरत्वप्रत्यभिज्ञाना त्तदानीमपि गन्धाद्युपलब्धेश्च तस्यपार्थिवत्वसिद्धेः, ननु तस्य पार्थिवत्वे पाञ्चभौतिकत्वव्यवहारस्तत्र कथमिति चेत्, जलादीनामपि तत्र निमित्तत्वेन पृथिव्या उपादानत्वेन च तादृशव्यवहारोपपत्तेः, ननु किन्तावच्छरीरत्वं, नच तज्जातिः, पृथिवीत्वाभावसमानाधिकरणं शरीरत्वं वरुणलोकीयशरीरे, शरीरत्वाभावसमानाधिकरणं पृथिवीत्वं घटादौ, तयोरेकत्र मानुषादिशरीरे सत्वेन साङ्कर्यात्, किन्तु चेष्टाश्रयत्वं शरीरत्वम्, चेष्टाच हिताहितहितप्राप्तिपरिहारानुकूला क्रियारूपा, चेष्टतइति प्रत्यक्षसिद्धा जातिः, ननु वृक्षादेस्तादृशचेष्टाश्रयत्वरूपशरीरत्वसत्वेकिम्मानमितिचेत् प्राणाख्यवायुसंयोगस्यैव मानत्वम्, ननु तत्र तादृशवायुसंयोग एव मानाभाव इति चेन्न, विभागविशेषविश्लिष्टावयवरूपभग्नक्षतसंरोहणयोस्सत्वेऽपि पुनस्संरोहणवृद्ध्यादिना तत्संयोगानुमानात्, ननु शरीरस्य जीवभोगायतनत्वाद्वृक्षादौ च तदभावात्क्वं तत्र शरीरत्वसाधनायासेनेति चेन्न, "नर्मदातीर

संजाता सरलार्जुनपादपाः । नर्मदातोयसंस्पर्शात्तेपि यान्ति परां गतिम् ” इत्यादिस्मृतिप्रामाण्यात्तेषामपि भोगायतनत्वात्, नन्वेवं शरीरावयवे हस्तादौ लक्षणापत्तिस्तस्यापि चेष्टाश्रयत्वादिति चेन्न, अन्त्यावयवित्वे सति चेष्टाश्रयत्वस्य ग्रहणेनादोषात्, अन्त्यावयवित्वञ्च द्रव्यानारम्भकद्रव्यत्वं, तत्वञ्च न हस्तादौ शरीरारम्भकत्वात्, नन्वेवं मृतशरीरे चेष्टाभावेनाव्याप्तिः, नच तत्रापि पूर्वं चेष्टासत्वान्नाव्याप्तिरिति वाच्यम्, यदा यस्यचेष्टावत्वं तदा तस्य शरीरत्वमिति तस्य लक्षणस्यकालघटितत्वादिति चेन्न, मरणानन्तरं यत्रखण्डशरीरान्तरमुत्पन्नं तत्राव्याप्तेर्दुर्वारत्वादिति चेन्न, चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजातिमत्वस्य विवक्षितत्वेनादोषात्, घटादावतिव्याप्तिवारणाय चेष्टावदिति, नन्वेवं पुनरपि तत्रातिव्याप्तिश्चेष्टावदन्त्यावयवि चैत्रशरीरं तद्वृत्ति द्रव्यत्वव्याप्यजातिः पृथिवीत्वं तद्वत्वाद्घटादेरिति चेन्न, अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्ति जातिमत्वस्यविवक्षितत्वेन पृथिवीत्वस्यान्त्यावयविमात्रवृत्तित्वाभावेन मनुष्यत्वचैत्रत्वाद्यादाय लक्षणसमन्वयेऽव्याप्तेरभावात्, ननु क्रियारूपचेष्टाश्रयत्वात्, पुनरपि घटादावतिव्याप्तिस्तु न शङ्क्यः, तेषां निरुक्तरूपचेष्टाश्रयत्वाभावात्, ननु शरीरस्योपचयापचयादिभेदेनानेकवृत्तित्वाच्चैत्रत्वादे र्जातित्वेऽपि नृसिंहस्य क्षणमात्रस्थायित्वेन नृसिंहत्वजातेरभावेन तदादाय लक्षणाननुगमे नृसिंहशरीरे लक्षणाव्याप्तिः, नच देवत्वजातिमादाय लक्षणसमन्वयः शङ्क्यः, तेजस्त्वाभावसमानाधिकरणदेवत्वस्य वरुणादौ, देवत्वाभावसमानाधिकरणतेजस्त्वं वह्न्यादौ, तयोरेकत्र सूर्ये सत्वेनैवंरीत्या सांकर्यात्, देवत्वस्य जातित्वाभावादिति चेन्न, कल्पभेदेन नृसिंहशरीर भेदात्, नृसिंहत्वजात्यैव तत्रापिलक्षणसमन्वयात् ।

## (२७) घ्राणस्य पार्थिवत्वे किम्मानम् ?

मूले विषयशरीरेन्द्रियभेदेनानित्यपृथिव्यास्त्रैविध्यमुक्तम्, तत्र घ्राणेन्द्रियं पार्थिवम् । ननु घ्राणेन्द्रियस्य पार्थिवत्वे किम्मानमिति चेत्, घ्राणे-

न्द्रियं पार्थिवं रूपादिषु मध्ये गन्धाभिव्यञ्जकत्वे सति तदितरानभिव्यञ्जकत्वात् कुंकुमगन्धाभिव्यञ्जकगोघृतवत्, घ्राणेन्द्रियस्य गन्धेतरगन्धत्वस्याप्यभिव्यञ्जकत्वात्, हेत्वप्रसिद्धिवारणाय हेतौ रूपादिषुमध्ये इतिविशेषणम्। ननु दृष्टान्तस्य गोघृतस्यस्वकीयरूपाभिव्यञ्जकत्वेन तत्र हेतोरभावाद्दृष्टान्ताप्रसिद्धिरिति चेन्न, परकीयरूपाद्यव्यञ्जकत्वे सति गन्धाभिव्यञ्जकत्वादिति हेतोर्विवक्षितत्वेन तस्य स्वरूपाभिव्यञ्जकत्वेपि दृष्टान्तत्व सम्भवात्। नन्वेवं जले नवशरावगन्धाभिव्यञ्जकत्वरूपहेतुसत्वात्, पार्थिवत्वरूपसाध्याभावात् साध्याभावाधिकरणवृत्तित्वेन निरुक्तहेतोर्व्यभिचारित्वमिति चेन्न। जलस्यसक्तुरसादेरप्यभिव्यञ्जकत्वेन गन्धेतराभिव्यञ्जकत्वात्, तत्रहेतोरेवाभावेन व्यभिचाराभावात्। नच यत्र जलेन न सक्तुरसाभिव्यञ्जितस्तत्र जलविशेषे व्यभिचार एवेतियुक्तम्, परकीयरूपादिविषयकसाक्षात्कारस्वरूपायोग्यत्वस्य तेन विवक्षणात्। ननु हेतौरूपादिषुमध्यइत्यत्रादिपदेन शब्दगन्धस्पर्शानां ग्रहणमेवञ्चैषां सर्वेषां परकीयत्वविशेषणदाने गौरवमितिचे वाय्वूपनीतसुरभिभागस्य दृष्टान्तत्वसम्भवेनरूपादिविशेषणत्वेन परकीयानुपादानेऽपि क्षतिविरहात्। नन्वेवं घ्राणसंयुक्तसमवायरूप सन्निकर्षस्य गन्धमात्राभिव्यञ्जकत्वेन तत्र साध्याभावाद्व्यभिचार इति चेन्न, द्रव्यत्वे सतीति विशेषणदानेनादोषात्, तथा च घ्राणेन्द्रियं पार्थिवं द्रव्यत्वेसति रूपादिषुमध्ये गन्धाभिव्यञ्जकत्वेसति तदितरानभिव्यञ्जकत्वाद् वाय्वूपनीतसुरभिभागवदिति निष्कृष्टानुमानेन घ्राणेन्द्रियस्य पार्थिवत्वं सिध्यति।

## (२८) पृथिव्या विषयः कः तत्वञ्च किम्?

अयमत्राभिसन्धिः — द्व्यणुकादिब्रह्माण्डान्तरूपा पृथिवीविषय इत्युक्तम्। तत्र तावद्विषयत्वं न जातिः, सामान्यादावपि तत्सत्वात्, किन्तु सुखदुःखान्यतरसाक्षात्काररूपोपभोगसाधनत्वं तत्। ननु साक्षादुपभोगसाधनत्वं द्व्यणुकादावव्याप्तम् साक्षात्परम्परासाधारण्यविवक्षायां परमाणावतिव्याप्तम् तथाच द्व्यणुकादिब्रह्माण्डान्त इति ग्रन्थविरोध इति

चेन्न, परमाणोरपि विषयत्वेन साक्षात्परम्परासाधारणभोगसाधनत्वस्य विवक्षितत्वात् । नच मूलग्रन्थविरोधः, कार्यरूपपृथिव्या एव प्रकारत्रयेण विभागात् । कार्यपृथिवीविषयपरत्वेन मूलग्रन्थस्यसत्वादेव सर्वस्यादृष्टाधीनत्वं तट्टीकायामुक्तं तत्र कार्यपदन्तु नोपादेयमेव । ननु कार्यमात्रम्प्रत्यदृष्टस्यसमवायसम्बन्धेन हेतुत्वे समवायसम्बन्धेन घटाद्यधिकरणे कपालादौ समवायेन तत्रादृष्टाभावाद्व्यभिचारः, नच स्वसमवायिसंयोगेनादृष्टस्य तत्र हेतुतेति वाच्यम्, उक्तसम्बन्धेन शब्दरूपकार्याधिकरणे गगनेऽदृष्टसमवाय्यात्मसंयोगाभावेन तत्र व्यभिचारादिति चेन्न, स्वसमवायिसंयुक्तसंयोगेन तस्य हेतुत्वाङ्गीकारात् । स्वमदृष्टम्, तत्समवाय्यात्मा तत्संयुक्तो वाय्वादि स्तस्य संयोगो गगने, वस्तुतस्त्वदृष्टस्य न कार्यमात्रम्प्रति हेतुता साक्षात्, किन्तु तत्सामग्र्येव तत्कार्यजनिका, तथा च सामग्रीसम्पादकत्वेन परम्परया तदुपयोगः क्वचित्तु मेघसंचारादौ साक्षादेव तद्धेतुः । तदुक्तं "यत्कार्यं यददृष्टाधीनं तत्तदुपभोगंसाक्षात्परम्परया वा जनयत्येवेति" नन्वेवं सर्वस्यैव विषयत्वे शरीरादिभेदेन तस्यास्त्रैविध्यन्नस्यादिति चेन्न । शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनत्वं विषयत्वमिति स्वीकारादितिशम् ।

## (२६) कथन्तावत्परमाणुसाधारणं जलत्वं सिध्यति ?

अत्रेदंहृदयम् ÷ पृथिव्या असाधारणगन्धगुणवत्–जलस्यापि तादृशस्नेहगुणसत्वात्–तद्वत्स्नेहसमवायिकारणत्वं जलत्वं–तल्लक्षणं निष्पन्नम्, तथा च समवायसम्बन्धावच्छिन्नस्नेहत्वावच्छिन्न स्नेहनिष्ठकार्यतानिरूपित तादात्म्यसम्बन्धावच्छिन्नकारणता जलनिष्ठा तदवच्छेदकतया जलत्वजातिः सिद्धा । नन्वेवं स्नेहत्वं न कार्यतावच्छेदकं तस्यपरमाणावपिजलीये सत्वात् तत्रत्यस्नेहस्य च नित्यत्वात्, एवञ्च जले तन्निरूपितकारणत्वविरहे पक्षाप्रसिद्धिरिति चेन्न, अधिकदेशवर्तित्वेन स्नेहत्वस्य केवलस्यावच्छेदकत्वाभावेऽपि जन्यत्वसमानाधिकरणस्नेहत्वावच्छिन्नकार्यतानिरूपितकार-

णतायास्तत्रस्वीकारे तदवच्छेदकतया तत्सिद्धेरभ्युपगमात्। नन्वेवं जन्यस्नेहजनकतावच्छेदकतया जलत्वस्यसिद्धावपि न तस्य जातित्वसिद्धिः, शब्दसमवायिकारणताया जात्यवच्छिन्नत्वासम्भवादिति चेन्न, तत्र व्यक्त्येकत्वस्यबाधकत्वेन शब्दत्वस्य तत्वाभावेऽपि द्रव्यत्ववद्बाधकाभावेनजलत्वजातिसिद्धेः। नन्वेवंजलीयद्व्यणुकादिरूपजलस्यैव स्नेहसमवायिकारणत्वं नतु जलीयपरमाणोस्तेनस्नेहाजननात्, तथाच द्व्यणुकादौ जलत्वजातिसिद्धावपि परमाणौ सा न सिध्येदिति, ननु यथा फलानुपधायकेऽरण्यस्थदण्डेकारणतावच्छेदकधर्मवत्वरूपस्वरूपयोग्यत्वस्वीकारस्तथा जलीयपरमाणावपि तद्धर्मवत्वेबाधकाभाव इति चेन्नैवं, तस्य नित्यत्वेन फलोपधायकत्वाभावेऽपि परमाणौ नित्यत्वे तत्वप्रसङ्गादिति चेन्न, जन्यस्नेहजनकतावच्छेदकतया जन्यजलत्वजातिसिद्धिंविधाय परमाणोर्द्व्यणुकजनकत्वेन जन्यजलत्वावच्छिन्ननिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजलत्वावच्छिन्नकारणताया जलीयपरमाणुवृत्तितया तत्रापिजलत्वजातिसिद्ध्यभ्युपगमात्, नचवाच्यम् जलान्तरजननायोग्यजलावयविनि जलत्वं न सिध्येत्तत्रकारणतावच्छेदकस्य तस्याभावात्, जलमात्र एव जलान्तरसंयोगेन बृहज्जलजननयोग्यतासत्त्वेनजलस्यान्त्यावयवित्वानभ्युपगमात्, ननूक्तरीत्याद्विविधं जलत्वं सिद्धम्, द्व्यणुकादिमहाजलपर्यन्तं जन्यजलवृत्तित्वविशिष्टं जलत्वं, परमाणुसाधारणं केवलं जलत्वम्, तथाच द्व्यणुकादौद्वित्वविशिष्टं जलत्ववदिति ज्ञानं स्यात्तच्चाननुभवसिद्धमिति चेन्न, सामान्यविशेष जात्योः सम्वलनारूपदोषेण तादृशप्रतीत्यभावात्। ननु समवायेन स्नेह वत्वतल्लक्षणेन समवायेनजलत्वावच्छिन्नम्प्रति स्नेह एवकारणतावच्छेदकमस्तु तथा चातिरिक्तजलत्वजातिकल्पनाव्यर्थेति चेन्न, स्नेहवत्वेन स्पर्शवत्वेन वा कारणत्वकल्पनायां गौरवात्तस्या एव सिद्धेरिति शिवम्।

## (३०) वर्णः शुक्लो रसस्पर्शौ जलेमधुरशीतलावितिकारिकाव्याख्येया?

अत्रायमर्थः, जलेशुक्लो वर्णस्तत्रमधुरोरसः शीतस्पर्शः, ननूक्तरीत्या

शुक्लरूपवत्त्वं जलस्यलक्षणं लभ्यते तच्चायुक्तं स्फटिकादावतिव्याप्तेरिति चेन्न, जलस्यशुक्लरूपवत्त्वं ज्ञापयितुं तत्र तदुक्तेः, नतुतादृशलक्षणे तात्पर्य-मित्याशयात्, तादृशंलक्षणमेवेत्याग्रहेतु नैमित्तिकद्रवत्ववद्वृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तल्लक्षणंगृहाण, नैमित्तिकद्रवत्ववत्यौ तेजःपृथिव्यौ तद्वृत्तिर्या रूपवद्वृत्तिर्द्रव्यत्वसाक्षाद्व्याप्यजाति जलत्वरूपा तद्वत्त्वं जले–पृथिव्यामतिव्याप्तिवारणायाद्यंवृत्यन्तम्, तत्ररूपवद्वृत्तिद्रव्यत्वव्याप्यपृथिवीत्वजातिसत्वात् ।

वायावतिव्याप्तिवारणाय द्वितीयं वृत्यन्तम्, तत्र नैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यवायुत्वजातेः सत्त्वात्, नैमित्तिकद्रवत्ववद्वृत्तिरूपवद्वृत्तिद्रव्यत्वव्याप्यजातिः पटत्वादिस्तदादाय पटादावतिव्याप्तिवारणायसाक्षादिति, द्रव्यत्वसाक्षाद्व्याप्यत्वंजातौ,द्रव्यत्वव्याप्याव्याप्यत्वरूपं तच्चपटत्वादौ नास्ति, नन्वेवं जलेऽव्याप्ति र्द्रव्यत्वव्याप्यत्वं मूर्तत्वे-तद्व्याप्यत्वाजलत्वस्येति चेन्न, मूर्तत्वस्य जातित्वानङ्गीकारात्, जलघटान्यतरं गृहीत्वा घटादावतिप्रसङ्गवारणाय जातीति, अथैवंलक्षणेशुक्लाप्रवेशे मूलविरोध इति चेन्न, अभास्वरशुक्लेतररूपसमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्वस्यविवक्षितत्वात्, समानाधिकरणान्तं पृथिव्यामतिव्याप्तिवारणाय जलत्वस्य शुक्लरूपसामानाधिकरण्यादसम्भवःस्यादतः शुक्लेतरेति, तेजस्त्वमादायतेजस्यतिप्रसक्तिवारणायाभास्वरेति, अन्यत्कृत्यं पूर्ववत्, ननु कथं जलेशुक्लरूपं कालिन्दीजले नीलिमोपलम्भादिति चेन्न, नीलरूपजनकतावच्छेदकपृथिवीत्वजातेस्तत्राभावेन तत्र नीलरूपासम्भवात् । नन्वनुमानेन तत्र नीलरूपाभावेऽपिप्रत्यक्षतस्तदुपलब्धौतद्भाव एव स्यादिति चेन्न, स्वसमवायिसंयोगसम्बन्धेन नीलरूपाश्रयपार्थिवभागगततद्रूपस्यकालिन्दीजले प्रतीतेस्तद्भावाभावात्, अतएव कौतुकादिना तज्जलस्य गगनप्रक्षेपे धवलिमोपलम्भः, ननु मधुररसवत्त्वं जललक्षणं शर्करादावतिप्रसक्तमिति चेन्न, तिक्तरसवद्वृत्तिमधुरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्वस्य तदर्थत्वात् । पृथिवीनिरासाय प्रथमंवृत्यन्तम्, तेजो

निरासाय द्वितीयं, शेषं पूर्ववत्। ननु प्रत्यक्षेणास्तु कस्यापिरसस्यानुपलब्धे स्तत्र मधुरोरसइति साहसमात्रम् । न चैवं वाच्यम्, नारिकेलादौ जले तादृशरसोऽस्तीति , तत्र स्वसमवायिसंयोगप्रत्यासत्या पार्थिवरसानुभूयमानत्वात् , अन्यथा जम्बीररसादावाम्लोपलम्भेन तादृशरसवत्त्वमपितस्यस्यादिति चेन्न , हरीतक्यादिभक्षणेन तादृशरसस्य तत्रोपलब्धिस्वीकारात् , ननु पार्थिवहरीतक्यांजलोष्मसंयोगजपाकविशेषे माधुर्यमुपलभ्यते न तज्जलीयमिति चेन्न , जलसंयोगस्यापि पृथिवीरसोत्पादकाङ्गीकारे कल्पनागौरवात् , न चास्तु जले मधुरोरसस्तथापि जम्बीरफले, आम्लोपलम्भात्तादृशरसस्य तत्र स्वीकारे बाधकाभाव इति चेन्न , तदीयजले तादृशरसस्या श्रयोपाधिकत्वस्वीकारात् , ननु शीतस्पर्शवत्वं तल्लक्षणं चन्दनादावति व्याप्तमितिचेत्-शीतेतरस्पर्शवद्वृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्वस्य विवक्षितत्वात् , पृथिव्यादावतिव्याप्तिवारणायाद्यं वृत्यन्तम्, आत्मन्यतिव्याप्तिवारणायद्वितीयम् , असम्भववारणाय शीतेतरेति, शेषंकृत्यं पूर्ववत् । यत्तु कुत्रचिज्जलेऽप्यौष्ण्यप्रतीतिः साश्रयोपाधिकीति सर्वमवदातम् ।

(३१) "उष्णस्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् नैमित्तिकद्रवत्वन्तु नित्यतादि च पूर्ववदि"ति कारिका व्याख्येया ?

उष्णस्पर्शवत्वं तेजो लक्षणम् । उष्णत्वं स्पर्शवृत्तिजातिविशेषरूपमनुगतप्रतीति सिद्धम् , तथाच जन्योष्णस्पर्शत्वावच्छिन्नतेजोनिष्ठकारणतावच्छेदकतया तेजस्त्वजातिः सिद्धा, परमाणौ तु जन्यतेजस्त्वावच्छिन्नकारणतावच्छेदकतया जलत्ववत्सिध्यति, ननु सिद्धान्ते चन्द्रादेरपि तैजसत्वसत्वा त्तदीयकिरणे शैत्योपलब्ध्या लक्षणमव्याप्तमिति चेन्न , तेजस्त्वेन तत्राप्युष्णस्पर्शानुमानात् । ननु तर्हि तत्रौष्ण्यप्रत्ययः कुतो नेति चेन्न, तदन्तर्गताधिकजलभागगतशीतस्पर्शेनौष्ण्यतिरोधानेन तदग्रहसम्भवात् , ननु रत्नकिरणादौ का गतिरितिचेत्, तत्र पार्थिवस्पर्शेन तदभिभवाङ्गीकार इतिजा

नात्, नन्वेवं चक्षुरादिनिष्ठस्योष्णस्पर्शस्यान्येनानभिभूतत्वात्प्रत्यक्षानापत्तिरिति चेन्न, प्रत्यक्षे, उद्भूतत्वस्य हेतुत्वेन तदीयतादृशस्पर्शस्यानुद्भूतत्वेन तत्वाभावात् । भास्वरशुक्लरूपवत्त्वमपि तेजोलक्षणम्, नच वैश्वानरे मरकतकिरणादौ चातिव्याप्तिरिति वाच्यम्, पार्थिवरूपाभिभवेन तत्र शुक्लरूपाग्रहात्, ननु रूपाविषयकद्रव्यप्रत्यक्षस्यादृष्टचरत्वाद् वैश्वानरादेश्चाक्षुषानापत्तिरिति चेन्न, पित्तपितिम्ना शङ्खस्यपीतत्वेन भानवत्पार्थिवरूपेणापि तस्य प्रत्यक्षत्वसम्भवात्, वह्नेः शुक्लरूपानभिभवेऽपितदीयशुक्लत्वस्याभिभूतत्वेन तत्र शुक्लरूपाप्रतीतेश्च । नैमित्तिकद्रवत्ववत्त्वमपि तल्लक्षणान्तरम्, नच दहनादावव्याप्तं घृतादावतिव्याप्तञ्च तदिति वाच्यम्, पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्वस्यविवक्षितत्वात्, पृथिव्यामतिव्याप्तिवारणाय प्रथमं वृत्यन्तम्, जले तद्वारणाय द्वितीयम्, वायुतेजोऽन्यतरत्वमादाय वायावतिव्याप्तिवारणाय जातीति । तेजोऽपिद्विविधम्, नित्यमनित्यञ्च, नित्यं परमाणुरूपमनित्यं द्व्यणुकादिरूपमवयविच, शरीरेन्द्रियविषयभेदात्तस्यापि त्रैविध्यम् । शरीरमयोनिजमेव तच्चसूर्यलोके प्रसिद्धमित्यन्यत्र विस्तरः ।

## (३२) चक्षुषस्तैजसत्वे का युक्तिः ?

"इन्द्रियं नयनमितिमू"लम् एतेन चक्षुरिन्द्रियस्य तैजसत्वमुक्तम् । ननु तत्रकिम्मानमितिचे चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत्, दृष्टान्तस्य प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्रदृष्टान्तेऽव्याप्तिवारणायाद्यं परकीयेति, चक्षुषःपरकीयरूपव्यञ्जकत्वादसिद्धिवारणाय स्पर्शादिति, उक्तरीत्यापरकीयरूपव्यञ्जकजले व्यभिचारवारणाय हेतौ सत्यन्तम्, गगनादौ व्यभिचारवारणाय विशेष्यदलम्, घटादेः स्वकीयरूपव्यञ्जकत्वात्तत्र व्यभिचारवारणाय द्वितीयपरकीयेति, चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वेसतीत्यपि पूरणीयम् । विशेष्यदलेरूपपदानुपादाने विशेषणदले स्पर्शादिपदेन पञ्चानामपि स्पर्श-

रूपरसगन्धशब्दानां ग्रहणे हेत्वप्रसिद्धिः, तद्व्यावृत्तये केषाञ्चिदेव तत्र-त्यादिपदेन ग्रहणे गन्धेतरस्य तत्वे कुङ्कुमगन्धाभिव्यञ्जकगोघृतादौ व्यभिचारो रूपेतरस्यादिशब्देन ग्रहे प्रमाणाभावो ऽपिच घटादेः परकीयस्पर्शाद्यव्यञ्जकत्वेन परकीयआत्मनोगुणो ज्ञानं तस्य च विषयतयाऽव्यञ्जकत्वाद् घटादौव्यभिचारोऽतोरूपपदम् । वस्तुतस्तु प्रथमं परकीयन्न देयमेव किन्तु द्रव्यत्वे सति स्पर्शाद्यव्यञ्जकत्वेसति परकीयरूपव्यञ्जकत्वादित्येवहेतुः । नच प्रदीपस्यस्वीयस्पर्शव्यञ्जकत्वाद् दृष्टान्तासिद्धिः, इदानीं प्रभायादृष्टान्तत्वादिति शिवम् ।

## (३३) सुवर्णस्य तैजसत्वे किं स्वरूपमनुमानम् ?

कारिकायां " वह्निः स्वर्णादिर्विषयो मतः " इत्युक्तम् । तेन सुवर्णस्य तैजसत्वमापन्नम् । ननु सुवर्णं पार्थिवं नैमित्तिकद्रवत्ववत्वाद् घृतवदित्यनुमानेन तस्य पार्थिवत्वमेव सिद्धमिति चेन्न । सुवर्णं तैजस, मसति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वात्, यन्नैवं तन्नैवं यथा पृथिवीति निरुक्तानुमानेन तस्य तैजसत्वसिद्धेः । नन्वत्र कः पक्षः, न तावत्पीतरूपवद्द्रव्यम् बाधात् तैजसरूपोऽपि न, अनुमानात्पूर्वं तस्यासिद्धेः, सुवर्णपदवाच्यमपिन, धर्मशास्त्रे पीतद्रव्येऽपि तत्प्रयोगात्, तथा च पक्षाप्रसिद्धिरिति चेन्न, अत्यन्तानलसंयोगेऽनुच्छिद्यमानद्रवत्वाधिकरणस्यैव सत्वात् । पक्षतावच्छेदकहेत्वभेदेन सिद्धसाधनन्तु न, अवच्छेदकावच्छेदेनानुमितिस्वीकारात् । हेतौ प्रतिबन्धकान्तं जलमध्यस्थघृतादौ व्यभिचारवारणाय, घृतादौ तद्वारणाय संयोग इति । नच सुवर्णेऽसतिप्रतिबन्धक इत्यादि हेतुरस्तु साध्यं तैजसत्वं मास्त्विति युक्तम्, तादृशविशिष्टानुच्छिद्यकानद्रवत्वं तैजसत्वव्यभिचारि स्यात् तर्हि पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्या त्यन्ताग्निसंयोगनाश्यत्वन्नस्यादित्यस्य " अग्नेरपत्यं प्रथमंहिरण्यम् " इत्याद्यागमानुपपत्तेश्च तत्रानुकूलतर्कसत्वाद् । ननु तदानीं पीतिमगुरुत्वाश्रयपार्थिवभागस्यापि द्रुतत्वेन हेतुसत्वात् सा-

ध्याभावेन तत्र व्यभिचार इति चेन्न । जलमध्यस्थमपीक्षोदे द्रवत्वाभावेऽपि तत्प्रतीतिवत्पार्थिवभागस्याद्रुतत्वेऽपि तादृशप्रतीते भ्रमत्वात् । न च सुवर्णद्रुते तत्र कश्चन भागोऽद्रुतः प्रत्यक्षसिद्ध इति कथं प्रतीतेर्भ्रमत्वमिति साम्प्रतम्, पीतिमाश्रयपार्थिवभागस्यात्यन्ताग्निसंयोगेऽपि पूर्वरूपापरावृत्तिदर्शनेन तत्प्रतिबन्धकविजातीयद्रवद्रव्यस्य कल्पनया तस्य सुवर्णत्वसिद्धेः । अत्रायं प्रयोगः, अत्यन्ताग्निसंयोगी पीतिमगुरुत्वाश्रयो विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः, अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात् जलमध्यस्थपीतपटवत्, अग्निसंयोगस्य तेजःसुवर्णेऽपि सत्वादुक्तं पीतिमेति, अग्निसंयोगरहिते घटे पूर्वरूपविजातीयरूपानाधारे व्यभिचारवारणाय हेतौ सत्यन्तम्, जलपरमाणौ व्यभिचारवारणाय हेतौ पृथिवीत्वमपि देयम् । अप्रयोजकत्वशङ्कापि न, विरोधिद्रवद्रव्यसम्बन्धं विना पार्थिवाग्निसंयोगस्य पूर्वरूपविजातीयरूपजनकत्वात् । ननु सुवर्णद्रवद्रव्यत्वसिद्धावपि तस्य तैजसत्वमेव कथं सिद्ध्यतीति चेन्न, तत्र गन्धाभावेन पृथिवीत्वाभावे सांसिद्धिकद्रवत्वाभावेन जलत्वाभावे रूपवत्वेन वायुत्वाद्यभावे च तस्य तैजसत्वसिद्धेरित्यन्यत्र विस्तरः ।

## ( ३४ ) किं तावद् वायोर्लक्षणम्, तत्साधकानुमानञ्च किम्, तद्भेदाश्च के इति सर्वं निरूप्यताम् ?

"अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मत" इत्युक्तम्, तेनापाकजानुष्णाशीतस्पर्शवत्वं तल्लक्षणं सम्पन्नम्, अनुष्णाशीतस्पर्शस्य पृथिव्यां सत्वा त्तत्रातिव्याप्तिवारणायाऽपाकजेति, नन्वेवमपाकजस्पर्शवत्वमेवतल्लक्षणमस्तु-अनुष्णाशीतेति व्यर्थमिति चेन्न, जलतेजसोरप्यपाकजस्पर्शसत्वात्तत्रातिव्याप्तेः, नन्वेवमपाकजानुष्णाशीतस्पर्शवत्वं पटादावपि सत्वात्तत्रातिव्याप्तिरेवेति चेन्न, पाकजस्पर्शवदवृत्त्यनुष्णाशीतस्पर्शवदवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्वस्यविवक्षितत्वेनादोषात्, एवञ्च-

निरुक्तलक्षणेन वायवीयः स्पर्शः विजातीयः सिद्धः, तादृशस्पर्शत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नवायुनिष्ठकारणतावच्छेदकतया वायुत्वजातिः सिध्यति । ननु द्रव्यप्रत्यक्षे रूपस्य कारणत्वात् तत्र च तदभावात् प्रत्यक्षप्रमाणाऽभावेन वायुर्द्रव्यं नास्त्येवेति चेन्न, अनुमानप्रमाणस्य तत्र सत्वात्, अत्रेमान्यनुमानानि (१) योऽयं रूपवद्द्रव्यासमवेतः स्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत्, पृथिव्यादिस्पर्शे सिद्धसाधनवारणाय रूपवद्द्रव्यासमवेतेति स्पर्शविशेषणम्, (२) असति रूपवद्द्रव्याभिघाते योऽयं परमाण्वादिषु शब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः, अविभज्यमानावयवद्रव्यसम्बन्धिशब्दसन्तानत्वाद् दण्डाभिहतभेरीशब्दसन्तानवत्, अत्रापि पृथिव्यां सिद्धसाधनवारणायाभिघातान्तंपक्षविशेषणम्, विभागजशब्दे व्यभिचारवारणाय हेतावक्यवान्तं द्रव्यविशेषणम् (३) नभसि तृणतूलस्तनयित्नुविमानादीनां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका, अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौका धृतिवत्, जलादिगततृणादौ सिद्धसाधननिरासाय नभसीति पक्षविशेषणम्, प्रयत्नवदात्मसंयोगहेतुकधृत्यादौ व्यभिचारवारणाय हेतावस्मदादीतिविशेषणम् । (४) रूपवद्द्रव्याभिघातमन्तरेण तृणे यत्कर्म तत्स्पर्शवद्वेगवद्द्रव्याभिघातजन्यम् विजातीयकर्मत्वात् नदीपूराहतकाशादिकर्मवत्, तदुक्तम्-स्पर्शादिलिङ्गक इति । नित्यानित्यभेदेन वायुर्द्विविधः, परमाणुरूपोनित्यः, शरीरेन्द्रियविषयभेदेनानित्यस्त्रिविधः, तत्र शरीरमयोनिजं पिशाचादीनां मरुल्लोके प्रसिद्धम्, ननु वायोस्तालवादिवाग्व्यापाराभावात् करचरणाद्यभावेन चाहरणविहरणाद्यभावाद् भोगायतनत्वं तस्य न स्यादिति चेन्न, जलीयतैजसवायवीयशरीराणामुपष्टम्भकस्य पार्थिवभागस्य सत्त्वेनोपभोगक्षमत्वात्, जलीयादिव्यवहारस्तु तत्र जलादीनां प्राधान्यात् । वायवीयमिन्द्रियं त्वक्, त्वगिन्द्रियं वायवीयं रूपादिषुमध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात्, अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत्, इत्यनुमानादत्रापि त्वगिन्द्रियसन्निकर्षेऽभि-

चारवारणाय द्रव्यत्वे सतीति देयम् । विषयस्तु प्राणादिमहावायुपर्यन्तः, प्राणस्तु यद्यप्येक एव, तथापि हृदादिभिन्नस्थानवशान् मुखनिर्गमनादिक्रियाभेदाच्च भेदव्यपदेशः । तदुक्तम् "हृदिप्राणोगुदेऽपानः समानोनाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्व शरीरगः" इति शम् ।

## (३५) गगनसाधकानुमानप्रणाली कीदृशी ?

"आकाशस्य तु विज्ञेयो शब्दो वैशेषिको गुणः" इति मूलम्, तत्राकाशत्वन्न जातिरेकव्यक्तिवृत्तित्वात्, ननु किन्तर्हि तदिति चेच्छब्दाश्रयत्वरूपं तदिति गृह्यताम् । ननु कालस्य सर्वाश्रयत्वा त्तत्रातिव्याप्तिरिति चेन्न, समवायेनाश्रयताया विवक्षणात् । नन्वेवं शब्दोगुणइतिवक्तव्ये मूले वैशेषिक इति पदं व्यर्थमिति चेन्न, विशेषगुणान्तरव्यवच्छेदाय तदुक्तेः, ननु "सति कुडये सर्व चित्र" मिति न्यायेनाकाश एव मानाभावेन तन्निर्वचनमसङ्गतमिति चेन्न, शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वेसतिद्रव्याश्रितत्वात्, यन्नैवंतन्नैवं यथा रूपादिः, नचायं तथा तस्मान्न तथे त्यनुमानेन शब्दाधिकरणत्वेन तत्सिद्धेः । ननूक्तानुमानेन शब्दाधिकरणत्वाद्गगनं द्रव्यं तदा सिध्यति-यदाहेतौ तस्य द्रव्याश्रितत्वंप्रमाणान्तरेणनिश्चितम् तदेवाद्यापि न सिद्धमिति निरुक्तानुमाने विशेष्यासिद्धिरिति चेन्न, शब्दोद्रव्यसमवेतः गुणत्वा त्संयोगवदित्यनुमानेन विशेष्यासिद्धेः परिहारात् । नन्वेवं द्रव्यसमवेतत्वसाधकानुमाने पक्षेहेत्वभावरूपा स्वरूपासिद्धि, रद्यापि शब्देगुणत्वस्यासिद्धत्वादिति चेन्न, शब्दोगुणः चक्षुर्ग्रहणायोग्यवहिरिन्द्रियग्राह्यजातिमत्वात्स्पर्शवदित्यनुमानेन शब्दे गुणत्वसिद्धेस्तत्रस्वरूपासिद्धेरभावात्, घटादौ व्यभिचारवारणाय हेतावयोग्यान्वं विशेषणम्, आत्मनश्चक्षुर्ग्रहणायोग्यमनइन्द्रियग्राह्यजातिमत्वा त्तत्रातिव्याप्तिवारणाय वहिरितीन्द्रिये विशेषणम्, रसत्वादेश्च वहिरिन्द्रियचक्षुर्ग्रहणायोग्यवहिरिन्द्रिय

ग्राह्यत्वा त्तत्राति॰व्याप्तिवारणाय जातिमदिति । अथैवं शब्दस्य पृथिव्या-द्यष्टद्रव्याश्रितत्वे तावतापि विशेषणासिद्धि र्नापहृतेति चेन्न, शब्दो न पृथि-व्यादिद्रव्यचतुष्टयविशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावेसत्य-कारणगुणपूर्वकत्वेसति प्रत्यक्षविषयत्वात् सुखवदित्यनुमानेनशब्दस्य पृथि-व्यादिचतुष्टयगुणाभावसिद्धेः "अपाकजास्तु स्पर्शान्ताः" इत्यादिना पाक जरूपादीनां कारणगुणपूर्वकत्वस्य गुणनिरूपणे वक्ष्यमाणत्वात् पाकजरूपा-देरकारणगुणपूर्वकत्वेन तत्र व्यभिचारवारणायाद्यं सत्यन्तम् , पटरूपादेर-ग्निसंयोगस्यासमवायिकारणत्वाभावेन प्रत्यक्षविषयत्वेन च तत्र व्यभिचार वारणाय द्वितीयं सत्यन्तम् । अकारणगुणपूर्वकत्वञ्च गुणे स्वकारणकारण-गुणाजन्यभिन्नत्वम् , जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षविषयत्वा-दिति विशेष्यदलम् । नन्वेवं विशेषणासिद्धिपरपहृता शब्दस्य दिगादिद्र-व्यत्रयगुणाङ्गीकारेबाधकाभावादिति चेन्न , शब्दो न दिगादिद्रव्यत्रय-गुणो विशेषगुणत्वाद्रूपवदित्यनुमानेन शब्दस्य दिक्कालमनसांगुणाभाव-सिद्धेः । उक्तं हि "आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः" इति । ननु शब्दे विशेषगुणत्वसिद्ध्यावेवोक्तत्रिकगुणाभावसिद्धिः स्यात्तत्रैवमाना भाव इति चेन्न , शब्दोविशेषगुण श्चक्षुर्ग्रहणायोग्यवहिरिन्द्रियजन्यप्रत्य-क्षविषयत्वाद् रूपवदित्यनुमानेनात्मविशेषगुणाभावसिद्धेः , ज्ञानादौ व्यभिचारवारणाय हेतौ बहिष्पदम् । इत्येवमनुमानत्रयेण विशेषणासिद्धि परिहारे विशेष्यासिद्धेश्च ततः पूर्वानुमानेन परिहारे च पारिशेष्याच्छब्दा-धिकरणत्वेन नवमं गगनात्मकं द्रव्यं सिद्धम् । नन्वेवं वायवीयद्व्यणुका-दिषु सूक्ष्मशब्दक्रमेण वायावेव कारणगुणपूर्वकः शब्द उत्पद्यताम् तथा च पृथिव्यादिचतुष्टयगुणाभावसाधकानुमानेन स्पर्शवद्वायुगुणत्वेन तद-भावसाधने बाधः , शब्दस्यकारणगुणपूर्वकत्वे स्वरूपासिद्धिश्चेति चेन्न, स्वाश्रयद्रव्यध्वंसप्रयोज्यध्वंसप्रतियोगित्वरूपयावद्द्रव्यभावित्वस्यशब्दे ऽभा-वेन वायोर्गुणस्य स्पर्शस्य तत्वेन च तत्रबाधस्वरूपासिद्ध्योरभावात् । नन्वाकाशे महत्त्वसत्वात्प्रत्यक्षे च तस्यैवहेतुत्वात्प्रत्यक्षमेव तत्र मानमिति

चेन्न, उद्भूतरूपवत्त्वे सत्येव महत्वस्य तत्प्रयोजकत्वेन तत्र रूपाभावेन चाक्षुषप्रमाया अभावात् । नन्वेवमिह पक्षीतिप्रतीतिर्नस्यादिहेति प्रतीतेर्गगनावगाहित्वादिति चेन्न, आलोकस्य तादृशप्रतीतिविषयत्वादितिशम् ।

### (३६) कालस्य किं लक्षणम्, तस्य सद्भावे किं मानम्, तस्यैकत्वे क्षणादिनादिव्यवहारश्च कथम् ?

अत्रायमभिसन्धिः "जन्यानां जनकः कालः" इत्यनेनकालस्ययावत्कार्यंजनकत्वलक्षणं लब्धम् । नन्वेवं कार्यसामान्ये कालस्य समवायिकारणत्वासम्भवाद्द्रव्येऽसमवायिकारणत्वस्यासत्वाच्च कारणपर्यायवाचिमूलोक्तंजनकपदमसङ्गतमिति चेन्न, तस्य तृतीयकारणपरत्वेन कार्यत्वावच्छिन्नप्रतिनिमित्तकारणत्वं कालत्वमिति स्वीकारेणादोषात् । नन्वेवं दिगादीनामपिकार्यसामान्ये निमित्तकारणत्वेन तत्रातिव्याप्तिरिति चेन्न, कालिकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितमधिकरणत्वेन निमित्तत्वमिति तल्लक्षणेनादोषात्, सम्बन्धविशेषनिवेशान्नदिश्यतिव्याप्तिः, अधिकरणत्वेनेति निवेशाददृष्टादौ नसा । ननु कार्यमात्रम्प्रति तस्य निमित्तकारणत्वे मानाभाव इति चेन्न, अद्य घटोभविष्यति श्वः पटोभवितेत्यादि प्रतीतौ तत्तत्कार्योत्पत्त्यधिकरणत्वेन कालस्य विषयतया "यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपी"ति न्यायेन कार्यमात्रे तस्य तत्कारणत्वसिद्धेः । तत्सद्भावं दर्शयितुं मूले-उक्तम् "जगतामाश्रय" इति । कालः सर्ववानिति प्रतीत्या सर्वाधारत्वेन तत्सिद्धिरितितदभिप्रायः । ननु तादृशप्रतीतिर्दिग्विषयणी कथन्नेति चेन्न, इदानींघट इति प्रतीतेः सूर्यपरिस्पन्दादेर्विषयिकरणेन घटादेः सूर्यपरिस्पन्दादिना सम्बन्धस्य वाच्यत्वे दिनकरक्रियया घटादेः संयोगाद्यभावेन "स्वाश्रयतपनसंयोगिसंयोगरूपसम्बन्धसिद्धौ" तद्घटकतया कालस्यसिद्धेः । गगनमेव तद्घटकमास्तामिति चेन्न, गगनदिगात्मनां विनिगमनाविरहेणातिरिक्तकालस्य तद्घटकाङ्गीकारात् । तस्यातिरिक्तसिद्धौ कालः सर्ववानिति प्रतीतेरतिरिक्तकालविषयत्वमेव

सम्यक्, अनुमानेनापि तत्सिद्धिः, तथाहि ज्येष्ठे परत्वप्रत्ययः, कनिष्ठे ऽपरत्वप्रत्ययः सच परत्वापरत्वगुणविशेषाधीनः, तथाच परत्वापरत्वे सासमवायिकारणके भावकार्यत्वाद् घटवदि त्यनुमानेन किञ्चित्तयोरसमवायिकारणं सिद्धं, तच्च कालपिण्डसंयोग एव । ननु लाघवा त्कालस्यैकत्वे क्षणादिभेदव्यवहारो न स्यात्, नचैकस्मिन्नेव घटे घटकुम्भादिव्यवहारवदत्रापिस स्यादिति चेन्न ; एकस्मिन् विरुद्धनानाव्यवहारायोगादिति चेन्न, उपाधिभेदेनैकस्यापि तस्य विभिन्नव्यवहारविषयत्वसम्भवात् । तथाहि स्वविभागप्रागभावावच्छिन्नं कर्म, स्वं क्रिया तज्जन्यो यो विभागस्तस्य यः प्रागभाव स्तदवच्छिन्नं कर्म, इत्येकोपाधिः । नन्वेवं प्रथमक्षणे तद्व्यवहारोपपादनेऽपि द्वितीयक्षणे विभागोत्पत्त्या तत्प्रागभावाभावा त्तद्व्यवहारो न स्यादिति चेन्न, पूर्वसंयोगावच्छिन्नविभागरूपस्तत्र द्वितीयोपाधिस्वीकारात्, क्रियाजन्यविभागनाश्यपूर्वसंयोगविशिष्टस्वजन्यविभागरूपोपाधिरयम्, नन्वेवं तृतीयक्षणे पूर्वसंयोगस्यापि नाशे क्षणव्यवहारः कथमिति चेत् पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावरूपोपाधिस्तत्रेति गृहाण, पूर्वसंयोगध्वंसविशिष्टोत्तरसंयोगप्रागभाव स्तदर्थः, नन्वेवं चतुर्थक्षणे पूर्वसंयोगध्वंससत्वेऽपि उत्तरसंयोगोत्पत्तौ तत्प्रागभावाभावात् कथं स व्यवहारइतिचे दुत्तरसंयोगावच्छिन्नकर्मरूपचतुर्थोपाधिस्वीकारेण, अत्रायमभिसन्धिः पूर्वंक्रिया, क्रियातो विभागः, विभागात् पूर्वसंयोगनाशः, तत उत्तरदेशसंयोगः, ततः क्रियानाशः, तत्र क्रियाध्वंसात्प्रागुत्पत्तिकालिकक्रिया तज्जन्यविभाग तज्जन्यपूर्वसंयोगनाश तज्जन्योत्तरसंयोगानां क्रमशश्चतुर्णामुपाधित्वमिति, नच क्रियानाशे पुनः क्षणादिव्यवहारो न स्यादिति वाच्यम्, क्रियान्तरमादाय तदुपपत्तेः, ननु महाप्रलये जन्यभावध्वंसरूपे क्षणादिव्यवहारो न स्यादिति चेन्न, तत्रक्षणादिव्यवहाराऽभावस्येष्टत्वात्, नच महाप्रलयोत्पत्तौ तल्लक्षणस्याव्याप्ति स्तदधिकरणक्षणावृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वरूपस्य तस्याभावादिति चेन्न, स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंससमयस्यैव तदानीं तदुपपादकत्वादित्यन्यत्र विस्तरः ।

४

( ३७ ) दिशः सद्भावे किम्मानम्, तस्याएकत्वे प्राच्यादिभेद व्यवहारः कथमिति निरूप्यताम् ?

"दूरान्तिकादि धीहेतु रेका नित्या दिगुच्यते" इति मूलम्, तस्यायमभिप्रायः :- विप्रकृष्टेदेशे परत्वप्रत्ययः, सन्निकृष्ट देशेऽपरत्वप्रत्ययः सच परत्वापरत्वगुणविशेषाधीनः, तथाच परत्वमपरत्वञ्च सासमवायिकारणके भावकार्यत्वात्, यद्यद्भावकार्यं तत्तत्सामवायिकारणकं, यथा घटादि स्तथाचेमे तस्मात्तथा, ध्वंसेव्यभिचारवारणाय हेतौ भाव इति, एवञ्च तादृशप्रत्ययम्प्रति परत्वापरत्वे निमित्ते तत्र दिक् पिण्डसंयोग स्तत्र दिग्गिति क्रमेण दिश स्तद्बुद्धौ परम्परया निमित्तत्वेन दिक् सिध्यति, तस्या बहुत्वे मानाभावेनैकत्वं विभुत्वञ्च सिद्धम् । ननु तस्या एकत्वे प्राच्यादिविरुद्धार्थकशब्दप्रयोगः कथमिति चेन्न, उपाधिभेदेन तदुपपत्तेः, तथाच यन्मूर्तापेक्षयोदयगिरिसन्निहितं यन्मूर्तं सा ततः प्राची, तत्पेक्षयोदयगिरिसन्निहितत्वञ्च तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाऽल्पतरोदयसंयुक्तसंयोगवत्वम्, यन्मूर्तापेक्षयोदयगिरिव्यवहितं यन्मूर्तं सा ततः प्रतीची, तदपेक्षयोदयगिरि व्यवहितत्वञ्च तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षया बहुतरोदयगिरिसंयुक्तसंयोगवत्वम्, एवं यन्मूर्तापेक्षया सुमेरुगिरिसन्निहितं यन्मूर्तं तत उदीची, तथा यन्मूर्तापेक्षया सुमेरुगिरिव्यवहितं यन्मूर्तं सा ततोऽवाची, सन्निहितव्यवहितत्वे च पूर्ववद्बोध्ये, नन्वेवं सुमेरुगिरेर्दक्षिणस्या मेभिरूपाधिभि स्तथा व्यवहारसम्भवेऽपि तत उत्तरस्यां तथा व्यवहारः कथमिति चेन्न "सर्वेषामेव वर्षाणां मेरु रुत्तरतस्थित" इति नियमेन तत्राप्युक्तोपाधेरेव तादृशव्यवस्थासंभवादिति शम् ।

( ३८ ) ईश्वरसाधारणात्मत्वजातिं प्रसाध्या त्मसद्भावे किम्मानमिति ब्रूहि ?

अयम्भावः "बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा, धर्माधर्मौ गुणाह्येते आत्मनः स्यु श्चतुर्दश" इत्युक्तम्, तेन सुखदुः

खादिसमवायिकारणमात्मेति लब्धम्, तथाच सुखदुःखादिसमवायिकारणतावच्छेदकतयाऽऽत्मत्वजातिः सिद्धा, नन्वहं सुखीत्यादिप्रतीत्याऽऽत्मत्वेनात्मनो विषयीकरणा त्प्रत्यक्षमेव तत्र प्रमाणं किमित्यनुमानेन तत्साधनमिति चेन्न, सकलात्मसाधारणानुगतप्रत्यक्षासम्भवेन तद्भिन्ना तत्र जातित्वासिद्धेः, नन्वेवमपि सुखत्वावच्छिन्नम्प्रति सत्त्वेन द्रव्यत्वेन वा कारणत्वमस्तु किमिति तत्रात्मत्वेन तत्कल्पनेनेति, नचैवं घटादावपि सुखाद्यापत्तिरिति वाच्यम्, अदृष्टादेर्निमित्तकारणाऽभावेन तत्र तदापत्तेरभावादिति चेन्न, आत्मत्वापेक्षया तयोर्गुरुत्वेन तत्रकारणतावच्छेदकत्वकल्पनस्यान्याय्यत्वात्, नन्वात्मनिष्ठकारणतापि न फलोपधायकतारूपा त्वयागृह्यते इति द्रव्यत्वेन कारणतावादिनापि तस्या आत्मन्येव स्वीकारात्, स्वरूपयोग्यतारूपायाः कारणतावच्छेदकरूपत्वेन नवद्रव्यवृत्तिक्लृप्तद्रव्यत्वस्य तत्त्वेनापूर्वकल्पनाऽभावादिति चेन्न, आत्ममनःसंयोगेसति ज्ञानोत्पत्तिस्वीकारेण मनसि तदुत्पत्तिवारणायात्मत्वेन ज्ञानत्वाद्यवच्छिन्नम्प्रति हेतुत्वावश्यकत्वात्। नन्वेवमात्मत्वजाते रीश्वरात्मसाधारण्ये न मानमिति चेन्न "आत्मा वारेद्रष्टव्यः" इत्यादि श्रुतावात्मपदव्यवहारस्यैव मानत्वात्, नन्वेवमीश्वरे सुखाद्युत्पत्तिरपिस्यात्तत्र कारणतायाः सत्वादिति चेन्न, अदृष्टशरीरयोरपि तदुत्पत्तौ निमित्तत्वेनेश्वरे तदभावेन तदुत्पत्तेरभावात्, नन्वेवं नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव इति नियमेनेश्वरस्य स्वरूपयोग्यत्वे कदाचित्तत्रसुखाद्युत्पत्तिः स्यादिति चेन्न, जलपरमाणौ स्नेहानुत्पत्त्या तादृशनियमे मानाभावात्। नचैवमीश्वरेऽदृष्टं कुतो न जायते इति वाच्यम्, मिथ्याज्ञानस्य तत्र हेतुत्वेन तत्र तदभावेन तदभावात्, मिथ्याज्ञानस्य तत्र हेतुत्वे किम्मानमितिचेन् मुक्तात्मन्यदृष्टोत्पत्त्यभाव इति गृहाण, केचित्तु- ईश्वरे आत्मत्वजातिं नाङ्गीकुर्वन्ति, नचेश्वरस्य दशमद्रव्यत्वापत्तिः, द्रव्यविभागे आत्मपदस्थाने ज्ञानवत्त्वेन विभागात्। वस्तुतस्तु इदं न युक्तं वैदिकात्मपदादे र्ज्ञानादिमति लक्षणापत्तेः, आत्मसद्भावे प्रमाणमनुमानम्, अचेतनं चेतनाधिष्ठितं कार्यंकरोतीति व्याप्तिग्रहे शरीरेन्द्रिययोरचेतनत्वेपि

ज्ञानवत्त्वदर्शनाद्भवत्यनुमानमात्माऽस्तीति तथाच प्रयोगः "इन्द्रियाणि शरीरञ्च ज्ञात्राधिष्ठितम् अचेतने सति जनकतासम्बन्धेनावच्छेदकतासम्बन्धेन वा ज्ञानवत्त्वाद्वास्यादिवदि"ति, आत्मनि व्यभिचारवारणाय हेतौ सत्यन्तम्, तदुक्तम्मूले " आत्मेन्द्रियाद्यधिष्ठातेति " किञ्च चक्षुरादीनीन्द्रियाणि रूपाद्युपलब्धौ सकर्तृकाणि करणत्वाद्, छिदादिक्रियाकरणवास्यादिवदित्यप्यनुमानं तत्सद्भावे मानम्, तदप्युक्तं करणं हि स कर्तृकमिति" नन्वहं सुखीदुःखीत्यादिप्रत्यक्षविषयत्वमेवात्मनस्तत्किमिति मानान्तरगवेषणेनेति चेन्न, शरीरादेरात्मत्ववादिनां तादृशप्रतीतिविषयस्तद्भिन्नएवेति प्रदिपादनासम्भवेनानुमानेन देहादिभिन्नस्य तस्य साधनात् ।

( ३९ ) शरीरस्य कर्तृत्वे किं दूषणम् ?

अत्रेदं रहस्यं, ननु समवायसम्बन्धावच्छिन्नज्ञानाद्यधिकरणमेव चैतन्यं तथाच तार्किकमते मुक्तात्मनां प्राणाभावेन न ज्ञानाधिकरणं चैतन्यं यथा, तद्वन्ममापि मृतशरीरस्य न चैतन्य मेवञ्च शरीरस्यैवचैतन्यमस्तु कृतंतद्भिन्नेनात्मना, नच तवमते मृतशरीरे चैतन्याभावः किन्निबन्धन, मम मते तु प्राणविशिष्टात्मनोऽभाव एव तत्प्रयोजक इति वाच्यम्, तव तादृशविशिष्टात्माभावस्य प्राणाभावप्रयोजकत्वाऽपेक्षया केवलं मम लाघवात्व प्राणाभावस्यैव तदभावप्रयोजकत्वादिति चेन्न, अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावस्य दृष्टतया शरीरस्य चैतन्ये बाल्येऽनुभूतस्य स्थाविरे स्मरणानुपपत्तेः, ननु बाल्यशरीरं तदास्त्येवेति चेन्न, अवयवोपचयापचयैः शरीराणामुत्पादविनाशशालित्वेन तदानीं तच्छरीराभावात्, नच स्वप्रयोज्यसंस्कारवत्त्वसम्बन्धेन बाल्यशरीरसमवेतानुभवस्य वृद्धशरीरे सत्वान्नानुपपत्तिः स्मरणस्येति साम्प्रतम्, अनन्तसंस्कारकल्पनापेक्षयैकात्मस्वीकारे लाघवात्, ननुफलमुखगौरवस्य दोषानाधायकत्वमिति चेन्न, तथापि शरीरस्य चैतन्ये बालस्य प्राथमिकस्तन्यपाने प्रवृत्त्यनापत्तेः, नच प्रवृत्त्यभावेकारणाऽभावइति शङ्क्यम्, इष्टसाधनताज्ञानस्य,

तत्र हेतुत्वेन शरीरात्मवादिनांमते पूर्वं तदभावेन वर्तमानशरीरे स्तन्यपानम् इष्टसाधनमिति ज्ञानाभावेन स्तन्यपाने प्रवृत्यनापत्तेः, ननु प्रवृत्यन्यथानुपपत्तिस्तत्रापि तुल्येति चेन्न, मन्मते आत्मनोऽनादित्वा जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानींस्मृत्या तत्र प्रवृत्युपपत्तेः, नन्वेवमिष्टसाधनत्वाद न्यदपि स्मृतिरवगाहतामिति चेन्न, उद्बोधकमन्तरा स्मृत्यनुपपत्त्या तदभावेन पदार्थान्तर स्मरणाभावात्, नन्विष्टसाधनत्वस्याप्युद्बोधका ऽभाव इति चेन्न, जीवनादृष्टस्यैव स्तन्यपानप्रवृत्यनुकूलेष्टसाधनत्वस्य स्मृत्युपधायकत्वात्, ननु प्रथम जन्मनि तदुद्बोधकाभावे कथं तत्र प्रवृत्तिरिति चेन्न, संसारस्यानादित्वेन जन्मनि प्राथम्यस्य निर्धारणासम्भवात्, एवञ्चात्मनोऽनादित्वंसिद्धम्, नन्वनादेरपि घटादिप्रागभावस्य घटोत्पत्तौ नाशदर्शनादात्मनोऽपिध्वंस प्रतियोगित्वापत्तिरिति चेन्न, अभावरूपस्य प्रागभावस्य तत्वेऽपि अनादि भावस्याकाशादेरिवात्मनोऽपिनाशासम्भवान्नित्यत्वञ्च तस्य सिद्धम्, तदुक्तं शरीरस्य न चैतन्यं मृतेषु व्यभिचारत इति ।

## (४०) इन्द्रियात्मवादं निराकृत्य मनसश्चैतन्यंखण्डय ?

ननु शरीरस्य चैतन्याङ्गीकारे बालस्य स्तन्यपाने प्रवृत्यभावभयेन तस्यात्मत्वाभावेऽपि, अहंकाण इत्यादि प्रतीत्येन्द्रियाण्येवात्मास्तु । नच तेषां जडत्वात्क्रियानुकूलकृतिमत्वं कर्तृत्वन्न सम्भवतीति वाच्यम्, इन्द्रियात्मवादिमते तदतिरिक्तस्यात्मनोऽभावेन तादृशकर्तृत्वस्य तत्रैवाङ्गीकारात्, नच सिद्धान्ते इन्द्रियातिरिक्तस्यात्मनः सत्वेनेन्द्रियाणां व्यापारवत्वे सति कारणत्वरूप करणत्वं सम्भवति, तत्र चक्षुःसंयोगादिरूपव्यापारवत्वस्य, चाक्षुषज्ञानाव्यवहितपूर्वकालवृत्तित्वस्यच सत्वात्, त्वन्मते तेषामेवकर्तृत्वेन तदतिरिक्तकरणाभावेन ज्ञानाद्यनुत्पत्तिप्रसङ्ग इतिवाच्यम्, इन्द्रियात्मवादिना तत्रैव कर्तृत्वकरणत्वोभयाङ्गीकारात्, नचैकस्यैवकरणत्वे कर्तृत्वे कर्तृकरणादिभेदव्यवहारोऽनुपपन्न इति वाच्यम्, कर्तृत्वकरणत्वादि लक्षणोपाधे र्भेदादेकत्रैव कर्तृकरणादिव्यवहारभेदोपपत्तेरितिचेन्न, अनुभव

स्मृत्योः सामानाधिकरण्यनियमेन पूर्वं चक्षुषाऽनुभूतस्य चक्षुर्विनाशे इन्द्रियान्तरेण स्मरणानुपपत्तेः, नन्वहंकाण इत्यादिप्रतीतेः का गतिरिति चेन्, ममेन्द्रियाणीत्यपि प्रतीत्या तत्प्रतीते र्भ्रमत्वात्, अपिच तेषामात्मत्वपक्षे समुदितस्यात्मत्वे चक्षुर्विनाशेऽपि श्रोत्रेण रूपप्रत्यक्षापत्तिः, एकस्यापि विनाशे तत्समुदायाभावेन मृतत्वव्यवहारापत्तिश्च, तेषां प्रत्येकमात्मत्वेतु परस्परवैमत्ये युगपद्व विरुद्धक्रियाकर्तृत्वे शरीरोन्मथन प्रसङ्गः, सुन्दोपसुन्दन्यायेनाकाण्डकलहे सर्वेषां विनाशप्रसङ्गश्च, तस्मात्तद्तिरिक्तआत्मेति सिद्धम्, तदुक्तम् "तथात्वं चेदिन्द्रियाणा मुपघाते कथं स्मृतिः", इति, नन्विन्द्रियाणां नानात्वादनित्यत्वाच्च निरुक्तदोष सद्भावेऽपि मनस आत्मत्वमस्तु तस्यैकत्वं नित्यत्वञ्च तार्किकाणामपि सम्मतम्, तत्करणानिच चक्षुरादीनि सन्तु तथाच नानुपपत्तिः स्मरणस्य, नाप्येकस्य तस्य केनापि विग्रह इतिचेन्न, मनसोऽणुत्वेन प्रत्यक्षे च महत्वस्य हेतुत्वेन तत्प्रत्यक्षाभावे तद्धर्मज्ञानसुखादीनामपि प्रत्यक्षाभावप्रसङ्गात्, ननु तवातिरिक्तात्मनो विभुत्ववन्ममापिमनसो विभुत्वमेवकिन्नेतिचेन्न "अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहोच्यते"इत्यनेन तस्याणुत्वस्य वक्ष्यमाणत्वात्, तस्मान्न मन आत्मेत्यन्यत्र विस्तरः ।

## (४१) आत्मनः क्षणिकविज्ञानरूपत्वे को दोषः ?

अत्रेदमाकूतम्योगाचारो बौद्धः पदार्थमात्रं विज्ञानस्वरूपं मन्यते, द्विविधञ्चविज्ञानम्—प्रवृत्तिविज्ञानमालयविज्ञानञ्चेति, तत्रायंघटइत्या प्रवृत्तिविज्ञानम्, अहमित्याकारकमालयविज्ञानम् तदेवात्मा, ननु विज्ञानस्य बुद्धिरूपत्वा त्तस्याश्च जडत्वा त्कथमात्मत्वमिति चेन्न, स्वपरव्यवहारे स्वभिन्नप्रकाशानपेक्षत्वरूपस्वतःप्रकाशत्वस्य तत्र सत्वेनोक्तदोषाभावात्, नच ज्ञानसुखादेरतिरिक्तस्यानुभवाद्वस्तुमात्रस्य विज्ञानरूपत्वंत्वन्मते न सम्भवतीति वाच्यम्, ज्ञानसुखादेरपि विज्ञानस्याकारविशेषस्वीकारात्, ननु वस्तुमात्रस्य विज्ञानत्वे त्वन्मते तस्य क्षणिकत्वाद्व घटादेश्चिरप्रतीति-

नं स्यादिति चेन्न, यत्सत्तत्क्षणिकमिति व्याप्त्या विज्ञानस्य भावत्वेन तस्य क्षणिकत्वाङ्गीकारात्, ननु क्षणिकविज्ञानस्यात्मत्वे सुषुप्तावात्मा न सिद्धयेत् पूर्वोत्पन्नविज्ञानस्य क्षणिकत्वेन नाशाद्विज्ञानान्तरस्य तदानीमुत्पादकाभावादिति चेन्न, पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञाने कारणत्वा त्सुषुप्तावप्यहमाकारालयविज्ञानधारायाः सत्वाभ्युपगमात्, ननु विज्ञानस्य क्षणिकत्वेन तदीयसंस्कारस्यापि तत्वा त्कालान्तरे स्मरणानापत्तिरिति चेन्मैवम्, एकत्र वसनेस्थितस्य मृगमदस्य तत्तत्पटभेदपरम्परया सर्वत्रगन्धसंक्रान्ति वत्पूर्वपूर्व विज्ञानजन्यसंस्काराणां स्वोत्तरोत्तरविज्ञाने संक्रान्तत्वेन स्मृत्युपपत्ति सम्भवादतो विज्ञानमेवात्मेति चेन्न, विज्ञानस्य सर्वविषयकत्वे सर्वेषां सर्वज्ञत्वापत्तेः, नच यत्किञ्चिद्विषयकमेव तदिति साम्प्रतम्, विनिगमकाभावात्, ननु यस्य यद्विषयकमनुभवसिद्धं तस्य तद्विषयकं विज्ञानमङ्गी क्रियते इति चेन्न, ज्ञानस्य सविषयत्वात् सुषुप्तावपि विषयभानप्रसङ्गात्, ननु सुषुप्तौ निर्विषया विज्ञानधारा प्रवर्तत इति चेन्न, ज्ञानत्वस्यविषयिता व्याप्यत्वान् निर्विषयायाश्चित्सन्ततेस्तदानीमभावात्, प्रमाणाभावेऽपि तत्रज्ञानत्वं स्वीक्रियत इति चेद्, घटादिविषयाणामपि विज्ञानत्वापत्तिः, ननु मम विज्ञानातिरिक्तवस्तुनोऽभावाद् घटादेर्विज्ञानत्वमिष्टमेवेति चेन्न, घटत्वादिना तदनुभवस्यापह्नवाशक्यत्वात्, ननु घटादयोऽपि विज्ञानाकारविशेष एवेति चेन्न, आकारस्य विज्ञानाद्भेदे तदतिरिक्तवस्तुसिद्धौ स्वत्सिद्धान्तभङ्गापत्तेः, ननु घटादयो न विज्ञानाद्भिन्ना इति न सिद्धान्तभङ्ग इति चेन्न, नानाधर्मावगाहिज्ञानरूपसमूहालम्बनज्ञाने "तदभिन्नाभिन्नस्य तदभिन्नत्व" मितिन्यायेन नीलाकारस्यापि पीताकारापत्तेर्विज्ञानस्वरूपस्याभेदात्, ननु नीलाकारपीताकारावभिन्नावेव भेद प्रतीति र्नीलत्वपीतत्वयो र्भेदात्, नच तयोरपि विज्ञानस्वरूपत्वादभेदः किन्नेति चेन्न, नीलत्वादेरपारमार्थिकस्य पारमार्थिकविज्ञानेनाऽभेदासम्भवादिति चेन्न, नीलत्वादेर् विरुद्धस्यैकत्र विज्ञाने समावेशासंभवात्, विरुद्धानामपि नीलत्वादीनां सामानाधिकरण्ये काक्षतिरिति चेन्न, विरोधनिश्च-

यस्यैवाशक्यत्वात्, ननुसमूहालम्बने पार्थक्येन नीलाकारादि नाभ्युपेयते किन्तु चित्राकार एवेति नोक्त दोष इति चेन्न, पूर्वविज्ञानवासनाया उत्तरविज्ञाने संक्रमासंभवाद्, धर्मिणोधर्ममन्तरेणानवस्थानात्, अन्यथा मातृपुत्रयोरपि तस्याः संक्रमप्रसङ्गात्, ननूपादानेनानुभूत मुपादेयेन स्मर्यते इति नियमान् मातृपुत्रयोरुपादानोपादेयत्वाऽभावेन नोक्तदोष इति चेन्न, तावतापि निरुक्तप्रकारेण तस्याः संक्रमासम्भवात्, ननूत्तर विज्ञानमुत्पत्तिकाले एव प्राक्तनविज्ञानसंस्कारेण सहैव जायत इत्येव संक्रम पदार्थ इति चेन्न, उत्तरविज्ञानोत्पत्तिकाले पूर्वविज्ञानस्य नष्टत्वादुत्पादकाऽभावेनोत्तरत्र वासनानुत्पत्तेः, अथोत्तरविज्ञान मुत्पद्यमानं स्वयमेव वासनामुत्पादयतीति मतं, तर्हि विज्ञानानामेव तदुत्पादकत्वे तेषामानन्त्यात् संस्कारानन्त्यप्रसङ्गः, नच क्षणिकविज्ञाने शक्तिविशेषोऽस्ति येन पूर्वविज्ञानानुभूतमप्युत्तरत्र स्मृतिं जनयतीति साम्प्रतम्, अतिशयविशेषे प्रमाणाभावात्. अतः क्षणिकविज्ञान नात्मा--किन्तुनित्यो ज्ञानवानात्मेति सिद्धम् ॥ एतयैवयुक्त्याक्षणिक शरीरेष्वेव चैतन्यं वदन्तः परास्ताः, ननु क्षेत्रस्थ बीजादङ्कुरोत्पत्ति र्न कुसूलस्थादिति–तथाचाङ्कुरत्वावच्छिन्नम्प्रति कुर्वद्रूपत्वेनहेतुत्व न्त्वयाङ्गीकृतं तदिव क्षणिकशरीरेषूत्तरोत्तरशरीरनिष्ठवासनोत्पादकत्वं मया वाच्यमिति चेन्न, तत्रापि धरणीसलिलसंयोगादिसहकारिसमवधानासमवधानाभ्यां निर्वाहे ममापि कुर्वद्रूपत्वस्याकल्पनादितिशम्।

## (४२) आत्मनो नित्यविज्ञानरूपत्वं कुतो न ?

अथात्मनः क्षणिकविज्ञानत्वे वासनाऽसंक्रमादिदोषेण तदनङ्गीकारेऽपिनित्यविज्ञानात्मनः स्वीकारे पूर्वोक्तदोषाभावेन नित्यविज्ञानमेवात्मास्तु, नच वाच्यं तस्य नित्यत्वे विज्ञानत्वे च मानाभावः, अविनाशी वारेऽयमात्मासत्यं ज्ञान मनन्तंब्रह्म, इत्यादिश्रुतेस्तत्रमानत्वादितिचेन्न, आत्मनोविज्ञानरूपत्वे सर्वविषयकत्वे सर्वेषांसर्वज्ञत्वापत्तेः, यत्किञ्चिद्विष-

यकत्वे विनिगमनाऽभावात् , नापि निर्विषयविज्ञानरूपः सः, निर्विषयस्य विज्ञानत्वे मानाभावात् , ननु जीवस्य न जगद्विषयकत्वं नवानियतयत्किञ्चिद्विषयकत्वम् , किन्तु यद्विषयकत्वं यत्र जीवेऽनुभवसिद्धं तत्र तद्विषयकत्वमितिचेन्न , आत्मनो ज्ञानरूपत्वे ज्ञानात्मनोः पर्यात्वाद्व घटविषयकज्ञानमितिवद्व,घटविषयकोऽहमित्यनुभवापत्ते र्घटज्ञानवानहमिति सर्वानुभवस्यापलापात्तेश्च, तस्माज्ज्ञानादिभिन्नोनित्यश्चात्मेति सिद्धम् , सत्यंज्ञानम्— इति श्रुतिरेवात्मनो ज्ञानरूपत्वे मानमितिचेन्न, तस्या ब्रह्मपरत्वात् , ननु वेदान्तिनां जीवब्रह्मणोरैक्याद्व ब्राह्मपरत्वे तस्या जीवपरत्वमपि सिद्धमेवेतिचेन्न , ज्ञानाज्ञानसुखित्वदुःखित्वादिभि र्जीवानामपि भेदस्यानुभवा ज्जीवब्रह्मणो र्भेदस्य सुतरां सिद्धत्वात् , नन्वेकस्मिन्नेवब्रह्मणि जीवोपाधीनामनन्ततया तत्तदन्तःकरणावच्छेदेन विलक्षणसुखित्वाद्यनेकानुभवे नास्तिविरोध एकत्रैव गगने नानाकर्णशष्कुल्यवच्छेदेन विरुद्धशब्दतदभावयोरनुभववदितिचेन्न , चैत्रमैत्रात्मनोरीश्वररूपयोरैक्यादेकस्य बन्धमोक्षयो स्तदितरस्यापि तदापत्तेः। नन्वेवं जीवब्रह्मणोरैक्यबोधिकाया "तत्त्वमसि" इत्यादिश्रुतेरप्रामाण्यापत्तिरितिचेन्न, तयोर्भेदेऽप्युपासनायां "मनोब्रह्मेति" श्रुत्या मनसि ब्रह्मबुद्धिवदभेदभावनयैवोपासितव्यमित्यत्र तत्तात्पर्यात्, तयोर्भेदादेव "सर्वे आत्मानःसमर्पिताः" इति श्रुतिरपिसंगच्छते , ननु मोक्षकाले जीवात्मनां ब्रह्मणासहाभेद उत्पद्यत इति चेन्न, तयो र्भेदस्य नित्यत्वेन नाशासम्भवात्। नन्वस्माकंब्रह्मातिरिक्तसर्वस्याऽनित्यत्वान् मोक्षकाले तयोर्भेदस्यापि ध्वंस इति चेन्न, भेदनाशेऽपि तदानीं व्यक्तिद्वयात्मत्वेन तयोरवस्थानात् , ननु तदानीं द्वित्वस्यापि नाशात् कथं व्यक्तिद्वयस्यावस्थितिरिति, चेन्न,एकमेवेतिश्रुत्या निर्धर्मकेब्रह्मणि सत्यत्वाभावेऽपि तस्य सत्यस्वरूपाङ्गीकारवद्व द्वित्वाभावेऽपि तयोर्व्यक्तिद्वयात्मकत्वस्यापि वक्तुं शक्यत्वाद् । नन्वभावस्याधिकरणात्मकत्वा न्मिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मरूपत्वान्निर्धर्मकत्व स्वभिन्नधर्मशून्यत्वं नानुपपन्नमिति चेन्न, एकत्वसंख्याया अभावस्वरूपस्य व्यक्तिद्वयात्मकद्वित्वस्यापि सुवचत्वात्, ननु कथमेक-

त्वाधिकरणे तदभावरूपं द्वित्वमितिचे त्प्रत्येकंसर्वासु व्यक्तिष्वभेदरूपैकत्व-सत्वेऽप्युभयं नैकमिति भेदसाधकसर्वानुभवसिद्धप्रत्ययस्यापलापाऽसम्भवो यथा पृथिव्यां गन्धसत्त्वेऽपि पृथिवीजलयोर्नगन्ध इति व्यवहारः। ननुमोक्षे "ब्रह्मविद् ब्रह्मैव भवति" इति श्रुत्या तयोरभेदः प्रमाणसिद्ध इति चेन्न, सम्पदाधिक्येपुरोहितेऽपि राजत्वव्यवहार वन्निर्दुःखत्वाजीवस्येश्वर-साम्यबोधने तत्तात्पर्यात्। अतएव "निरञ्जनः परमं साम्यमुपैति" इति श्रुतिः संगच्छते । ननु न जीवस्य ज्ञानरूपत्वं ब्रूमः किन्त्वीश्वरस्यैवेति चेन्न, "यः सर्वज्ञः स सर्ववित्" इति श्रुतेरेकवाक्यतया "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतावपि, अर्श आदित्वादचि प्रत्यये तस्यापि ज्ञानसुखाद्याश्रयत्वाङ्गीकारात्, नन्वानन्दवदित्यर्थस्त्वन्मते न संगच्छते, ईश्वर आनन्दाभावादिति चेन्न, भारापगमे सुखित्वप्रतीतिवद् दुःखा-भाव आनन्दशब्दस्य भाक्तत्वात्। लक्षणाकल्पनमेव तत्र दोष इति चेन्न, "असुखम्" इति श्रुतेस्तत्रानन्दसत्त्वेऽपि तस्यानन्दरूपत्वानङ्गीकारात्। नन्वसुखमित्यत्र न विद्यतेसुखं यस्येति बहुव्रीहिणा तस्यसुखरूपत्वं सिद्ध-मिति चेन्न, बहुव्रीहावन्यपदार्थे शक्तिकल्पने गौरवात्प्रकरणादिविरोधाच्चे-त्यन्यत्र विस्तरः ।

## (४३) आत्मनिरूपणप्रस्तावे सांख्यमतं कया युक्त्या निरस्तं विश्वनाथेन?

इदमत्र हृदयम्-सांख्याः कर्तृभूतान्तःकरणप्रकृतित्वरूपकर्तृत्ववती प्रकृतिः, यथा पद्मपत्रमम्भसालिप्तन्नसम्भवति तद्वत्पुरुषः कर्तृत्वाद्याश्रयोन, तथाच प्रयोगः पुरुषः कर्तृत्वाभाववान् कारणत्वाभावाद् यन्नैवं तन्नैवं यथा प्रधानम् नचायं तथा तस्मान्न तथा। ननु तत्र कारणत्वसत्वाद्धेत्व सिद्धि रिति चेन्न, पुरुषस्य घटादिकारणत्वे घटादिकार्यस्यापि नाशो न स्यात्का-र्यकारणयोरभावादिति तस्याकारणत्वसिद्धेः । नचैतादृशपुरुषसत्वे न-मान-मिति शङ्क्यम्, अन्यत्र प्रसिद्धस्यैव चैतन्यस्य बुद्धावारोप सम्भवात्तत्र चैत-न्यान्यथानुपपत्त्या तत्कल्पनात्, ननु बुद्धिः कस्य कार्यमिति चेन् मूलप्रकृतेः

परिणाममवेहि। ननु महतत्त्वमन्तः करणं किन्ततोभिन्नमिति चेन्न, तस्या एव तयोः पर्यायत्वात्। ननु बुद्धेः किं कार्यमिति चेद् बुद्धेरिन्द्रियद्वारा स्वपरिणामेन घटादिज्ञानेन सम्बद्धो घटादि विषयः, स्वाकारज्ञानपरिणामिबुद्ध्याऽगृहीतभेदकत्वसम्बन्धेन पुरुषनिष्ठः पुरुषस्वरुपतिरोधानेन तस्य संसारसम्पादकत्वम्,बुद्धिनाशे सति तत्परिणामस्य ज्ञानस्याऽभावाद्विषयावच्छेदकाभावात् कैवल्यावस्थानरूपस्य मोक्षस्य सम्पादकत्वम्, इत्येव तत्कार्यं गृहाण। ननु पुरुषे साक्षात्सम्बन्धएव विषयस्यास्तु संसारव्यवहारनियामकोऽपि तत्र स एवेति किन्नाभ्युपेयत इति चेन्न, इन्द्रियप्रणालिकया बौद्धपरिणामेन ज्ञानेन घटादेः साक्षादेव सम्बन्धाङ्गीकारात्। ननूदासीने पुरुषे कर्तृत्वप्रतीतिर्बुद्धौ चैतन्य प्रतीतिः कथमिति चेद्, बुद्धिपुरुषयो र्भेदाग्रहेण तत्प्रतीति सम्भवः, ननु बुद्ध्युपलब्ध्योः पर्यायत्वात्कथं तत्परिणामोपलब्धिरिति चेन्न, तयोर्भेदात्, तथाहि ममेदं कर्तव्यमित्यत्र मंदशेदमंशव्यापारांशानां त्रयाणां प्रत्यय स्तत्राद्यः पुरुषसम्बन्धः, दर्पणस्य यथा मुखसम्बन्धः प्रतिविम्बमात्रस्तु तात्त्विकस्तथा बुद्धिपुरुषयो र्भेदाग्रहादेकत्वाभिमानः पुरुषोपराग इत्युच्यते, द्वितीय इन्द्रियद्वाराऽयं घट इत्यादिज्ञानरूपः परिणाम एव विषयघटादिना बुद्धेः सम्बन्धस्तात्त्विको निश्वासाभिहतदर्पणस्य मलिनिमेव, तृतीयस्तु पुरुषोपरागविषयोपरागाभ्यां कर्तव्यघटादेर्भासस्तेन कर्तव्यमित्यध्यवसाय इत्येवमंशत्रयवती बुद्धि स्तदीयपरिणामेन ज्ञानेन पुरुषस्य योऽतात्त्विकः सम्बन्धः स उपलब्धिरित्युच्यते, दर्पणस्य मलिम्नेव मुखस्य सम्बन्धो यथा, एवं ज्ञानस्य बुद्धितो भेदे तद्धर्मत्वेच सुखदुःखेच्छाद्वेषधर्माधर्म्मा अपि तस्या एव गुणाः, करोमीति कृत्याश्रये तेषामपि प्रतीतेः, ननु बुद्धे र्नित्यत्वमेव किन्नेति चेन्न, अनित्यधर्माश्रयत्वेन तस्या अप्यनित्यत्वादिति प्राहु, स्तन्न कृतिसामानाधिकरण्ये नादृष्टं जनयति तच्च तेनैव सम्बन्धेन भोगमित्येवं परम्परया सामानाधिकरण्यप्रमा वच्चेतनोऽहं करोमीति सामानाधिकरण्येन प्रतीते श्चैतन्याश्रयातिरिक्तबुद्धेरभावात्, नच चेतनोऽहमिति प्रत्यये चैतन्यांशे भ्रम स्तथाच प्रयोगः "कृत्याश्रयो न

चेतनः जन्यधर्माश्रयत्वाद्घटवदि"ति वाच्यम्, बुद्धिः कृत्यभाववती जन्यधर्माश्रयत्वाद् घटवदिति बुद्धेः कृत्यनाश्रयत्वबोधकानुमानस्य सत्वेन कृत्यंश एव भ्रमसिद्धेः। ननु कर्तृचेतनयोर्भेद एवास्त्विति चेन्न, बुद्धेरनित्यत्वे तत्पूर्वमसंसारापत्तेः, नित्यत्वे मोक्षाभावप्रसङ्गाच्च, नच वाच्यं जडप्रकृतिकार्यत्वाद् बुद्धिरचेतनेति कार्यकारणयोरभेदादिति, बुद्धेः प्रकृतिकार्यत्वाभावात्, कर्तृत्वस्य जन्यत्वव्याप्यत्वेऽप्रयोजकत्वात्। कर्तुर्नित्यत्वेऽपि मानाभाव इति चेन्न, सरागस्य जन्मदर्शनादित्यर्थकस्य "वीतरागजन्मादर्शना"दिति सूत्रस्यैव तत्र मानत्वात्, अनादिभावस्य नाशासम्भवादात्मनो नित्यत्वम्, ननु "प्रकृतेः क्रियमाणानि" इति स्मृतिविरोधः प्रकृत्याद्यकल्पने इति चेन्न, तत्रापि प्रकृतेरदृष्टस्य गुणै रदृष्टजन्यै रिच्छादिभिरितितदर्थाभ्युपगमात्, अत एव तदग्रेऽधिष्ठानादीनां कर्तृत्वमङ्गीकृत्य "तत्रैवं सति कर्तारमात्मानं केवलन्तुय" इति वाक्येन पञ्चानां कर्तृत्वमङ्गीकृत्वं ननु प्रकृते रित्यन्यत्र विस्तरः।

## (४४) ईश्वरसाधारणं प्रत्यक्षलक्षणं निरूप्यानुमित्यादेरपि लक्षणमुच्यताम् ?

इदमत्र तात्पर्यम्-बुद्ध्यादिगुणकआत्मेत्युक्त्वा स्मृत्यनुभवभेदेन बुद्धेर्द्वैविध्यं निर्दिश्य प्रत्यक्षानुमित्युपमितिशाब्दबोधभेदाद् अनुभूतेश्चातुर्विध्यमुक्तम्। अनुभूतेश्चातुर्विध्यंचतुर्विधकरणजन्यत्वात्। तथाच सूत्रम्—"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति" तत्रेन्द्रियजन्यत्वे सति ज्ञानत्वं प्रत्यक्षस्य लक्षणम्, इन्द्रियरूपादाविन्द्रियजन्यत्वादतिव्याप्तिरतोविशेष्यम्, ज्ञानत्वस्यानुमित्यादावपिसत्वा तत्रातिव्याप्तिवारणाय सत्यन्तम्। नन्वेवं तत्रातिव्याप्तिस्तदवस्थैव मनोरूपेन्द्रियजन्यत्वादिति चेन्न, इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यताशालिज्ञानत्वमिति तल्लक्षणे विवक्षितेऽनुमित्यादौ मनस्त्वेन तस्यकारणत्वेपीन्द्रियत्वेनाऽतत्वे तत्रातिव्याप्तेरभावात्। नन्विन्द्रियजन्यत्वाभावा दीश्वरप्रत्यक्षेऽव्याप्तिरिति

चेन्न, तत्प्रत्यक्षस्यालक्ष्यत्वात् । ननु जीवात्मप्रत्यक्षस्यैव लक्ष्यत्वं नेश्वर-प्रत्यक्षस्येत्यत्र मानाभाव इति चेत् "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञान मव्यपदेश्य मव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति" सूत्रे इन्द्रियपदोपादानेनेश्वरप्रत्यक्षस्यालक्ष्यत्वात्–तत्प्रत्यक्षस्यापि लक्ष्य त्वमित्याग्रहेतु ज्ञानाकरणकं ज्ञानं प्रत्यक्षं मितितल्लक्षण मिति गृहाण । ज्ञानाजन्यं ज्ञानं प्रत्यक्षमिति तु न, विशिष्टज्ञानमात्रस्य विशेषणज्ञानजन्यत्वा त्तत्रा व्याप्तेः । आद्येज्ञानेत्युक्तयाऽनुमित्यादौ नाति-व्याप्तिः, व्याप्तिज्ञानादेस्तत्र करणत्वात् । ननु योगिप्रत्यक्षेऽव्याप्ति स्तत्र मननादिज्ञानकारणत्वादिति चेन्न, ज्ञानत्वाद्यघटितधर्मावच्छिन्नकरण-कत्वाभाववत्वे सति ज्ञानत्वमिति तल्लक्षणेनादोषात् । नन्वेवं विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षेऽव्याप्तिः, विशेषणतावच्छेदकप्रकारकज्ञान-व्यापारकनिर्विकल्पकस्य तत्रकरणत्वादिति चेन्न, ज्ञानकरणकत्वा-व्यभिचारिजातिशून्यज्ञानत्वस्य तल्लक्षणत्वेनादोषात्, तादृशी जातिरनुमिति त्वादिरेव । वस्तुतस्त्वनुमित्यादावपि मनसः करणत्वं, तथाच ज्ञाना-करणकत्वं प्रत्यक्षप्रमालक्षणं तत्राव्याप्त मतो यत्किञ्चित्प्रत्यक्षमादाय तद्व्य-क्तिवृत्त्यनुमित्यवृत्तिजातिमत्वं प्रत्यक्षप्रमाया लक्षण मितिसारमिति प्रत्यक्षलक्षणम् । परामर्श जन्यत्वेसति ज्ञानत्वमनुमिते र्लक्षणम्, परामर्शश्च व्याप्तिविशिष्टपक्षधर्मताज्ञानरूप स्तथाच व्याप्तिविशिष्टपक्षधर्मता ज्ञानजन्यज्ञानमनुमितिः, वह्निव्याप्यधूमवान् पर्वत इति ज्ञानं व्याप्ति विशिष्टपक्षधर्मताज्ञानं तज्जन्यं पर्वतो वह्निमानिति ज्ञानमिति समन्वयः । ननु परामर्शप्रत्यक्षमपि परामर्शजन्यमिति तत्रातिव्याप्तिरिति चेन्न, परामर्शाजन्यत्वे सति हेत्वविषयकत्वेसति ज्ञानत्वमनुमितित्वमित्यङ्गी कारेणादोषात् । नच धूमवान्पर्वतो वह्निमानित्यनुमितावव्याप्तिरिति शङ्क्यम्, परामर्शजन्यज्ञानवृत्यनुभवत्वव्याप्यजातिमत्व मित्यङ्गीकारे तत्रापि तादृशजातिमत्त्वेनाऽव्याप्तेरभावात् । जातिमत्वञ्च समवाय सम्बन्धेन ग्राह्यं, तेन कालिकसम्बन्धेन तज्जातिमति काले नातिव्याप्तिः,

ननु पक्षधर्मताया: प्रवेशे गौरवमितिचे द्व्याप्तिज्ञानकरणकं ज्ञानमनुमिति-रिति गृहाण। ननु तत्र व्याप्तिज्ञानत्वेन न करणत्वं, किन्तु मनस्त्वेनैवोप-मित्यादावपि तथैव, नच वाच्यं करणैक्ये कार्यवैजात्यं न स्यादिति, सा-मग्रीवैलक्षण्येन तदुपपत्तेः। चतुर्विधप्रमाणासिद्धिरिति चेन्न, क्रियावि-शेषाद्विभागोपपत्तेरितिचेत्पर्वतोवह्निमानित्यादि या काचि दनुमिति -व्यक्तिस्तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्व मनुमितित्वम्। एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः, पदज्ञानकरणकं ज्ञानं शाब्दबोध इति शिवम्।

(४५) कियतां पदार्थानाञ्चाक्षुषप्रत्यक्ष न्तत्र चोद्भूतरूपस्य कारणतानुपगमे का क्षतिः ?

अयम्भावः-प्रत्यक्षं षड्विधं घ्राणजरासनचाक्षुषस्पार्शनश्रौत्रमानस भेदा त्तत्ररूपादीनाञ्चाक्षुषप्रमा भवति। तथाहि "उद्भूतरूपं नयनस्य-गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये, विभागसंयोगपरापर-त्वस्नेहद्रवत्वं परिमाणयुक्तम्। क्रियाञ्जातिंयोग्यवृत्तिंसमवायञ्च तादृशम्, गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोरिति" चाक्षु-षप्रत्यक्षे आलोकसंयोगोद्भूतरूपयोः कारणत्व मन्यतराभावे तदनापत्तेः। अन्धकारेचाक्षुषापत्तिवारणायालोकसंयोगस्यहेतुत्वम्, पिशाचादीनाम्प्रत्य-क्षत्ववारणायोद्भूतरूपस्यकारणत्वम्, ग्रीष्मोष्मचूर्णप्रविष्टतेजसां चाक्षुष प्रत्यक्षापत्तिवारणाय रूपे-उद्भूतत्वविशेषणं,। तत्र द्रव्यचाक्षुषम्प्रति तयोः समवायसम्बन्धेनकारणत्वम्। द्रव्यसमवेतरूपादिप्रत्यक्षम्प्रति तयोःस्वा-श्रयसमवायसम्बन्धेन हेतुत्वम्, स्वन्तदुभयं तदाश्रयो द्रव्यं तत्र समवायो रूपादेः, द्रव्यसमवेतसमवेतरूपत्वादिप्रत्यक्षम्प्रति, तयोः स्वाश्रयसमवेत-समवायसम्बन्धेन हेतुत्वम्, स्वन्तदुभयन्तदाश्रयो द्रव्यं तत्समवेतं रूपादि तत्र समवायेन रूपत्वमिति, तथाचोद्भूतरूपवद्द्रव्यपृथक्त्वसंख्याविभाग-संयोगपरापरत्वस्नेहद्रवत्वपरिमाणयोग्यव्यक्तिवृत्तिक्रियाजातिसमवाया एते चाक्षुषप्रत्यक्षविषया इति शम्।

(४६) वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षसामान्य म्प्रति किङ्कारणमत्र च प्राङ्नव्ययोः कोलाहलश्च क इति निरूप्यताम् ?

"रूपान्यच्चक्षुषोयोग्यं रूपमात्रापिकारणं, द्रव्याध्यक्षे" इत्यनेन त्वाचप्रत्यक्षेऽपि रूपस्य कारणत्वमुक्तम्, एवञ्चघ्राणरसनश्रोत्रेन्द्रियैर्द्रव्यप्रत्यक्षाभावेन बहिश्चक्षुस्त्वगिन्द्रियेणैव द्रव्यप्रत्यक्षस्य सिद्धतया चाक्षुषत्वाचप्रत्यक्षयोश्च रूपस्य हेतुत्वाद्, वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षेरूपं कारणं सिद्धमिति प्राचीनमतम्, चाक्षुषप्रत्यक्षेरूपे हेतुता-त्वाचप्रत्यक्षे च स्पर्शइत्येवान्वयव्यतिरेकसिद्धोहेतुरिति नव्याः। ननु कार्याभावे कारणाभावस्य प्रयोजकत्वाद् गगनादे र्वहिरिन्द्रियजन्यप्रत्यक्षाभावे रूपाभावस्पर्शाभावयोः प्रयोजकत्वकल्पने गौरवं मननुगमश्च रूपस्यकारणत्वे तु रूपाभावस्य तत्वे लाघवमिति चेन्न, तत्रात्मावृत्तिशब्दभिन्नविशेषगुणवत्वरूपानुगतप्रयोजकत्वाङ्गीकारात्, आत्मनश्चक्षुरादिना प्रत्यक्षवारणाय वृत्यन्तम्, आकाशस्य तद्वारणायशब्दभिन्नेति, कालादे स्तद्वारणाय विशेषेति। ननुरूपस्य वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षकारणत्वे लाघवमिति चेन्न, वायौ रूपाभावेन तस्य त्वाचप्रत्यक्षानापत्तेः। नच वायोरप्रत्यक्ष इष्ट एवेति वाच्यम्, उद्भूतस्पर्शस्य लाघवा त्तत्र हेतुत्वेन तत्प्रत्यक्षसिद्धेः। ननु प्रभायां निरुक्तहेतुत्वाभावा त्तस्याः प्रत्यक्षानापत्तिरिति चेन्न, तव वायोरप्रत्यक्षव न्मम प्रभाया स्तत्वाभावस्येष्टत्वात्, तथा चोभयोः प्रत्यक्षसत्वादुद्भूतरूपतादृशस्पर्शयोरुभयत्रापि हेतुत्वं सिद्धम्। ननुत्रसरेणो स्त्वाचप्रत्यक्षानङ्गीकारात् तत्स्पार्शनवारणाय स्पर्शान्यद्रव्यसमवेतस्पार्शनप्रत्यक्षम्प्रति त्वक्संयुक्तस्पार्शनवद् द्रव्यसमवायत्वेन हेतुत्वस्य वाच्यतया वायोस्त्वाचप्रत्यक्षाङ्गीकारोऽनुचित इतरथा तद्गतसंख्यापरिमाणयोरपि त्वाचप्रसङ्ग इति चेन्न, तद्गतैकत्वादेःप्रत्यक्षस्येष्टत्वात्। नन्वेकत्वसंख्यायाः साधारण्यादाकाशादिगतैकत्ववदप्रत्यक्षमेवकिन्नेति चेन्न, वाह्यवायुव्यजनानिलादौ द्वित्वप्रत्यक्षस्यानुभवसिद्धत्वात्। ननु सजातीयसंवलनेभूयोऽवयवावच्छेदेन त्वगिन्द्रियसन्निकर्षाभावे च वायुपरिमाणसंख्ययोः कथमग्रहइति चेत्,

सजातीयसंवलनादिदोषेण तदग्रह इत्यवधार्य्यतामित्याहुः । अत्रायं निष्कर्षः रूपस्य वाह्यप्रत्यक्षे कारणत्ववादिनां प्राचांमते वायुप्रत्यक्षं न, त्वाचप्रत्यक्षन्तु तदीयस्पर्शगुणं विषयीकरोति नव्यमते पृथक्कारणत्वेन वायोः प्रत्यक्षं भवत्येवेति शम् ।

## ( ४७ ) जन्यज्ञान सामान्ये किंकारणम् ?

अत्रेदमाकूतम् "त्वचो योगो मनसा ज्ञानकारणं" मित्येनन ज्ञानसामान्यम्प्रति त्वङ्मनः संयोगस्यकारणत्वमुक्तम् , ननु नित्यज्ञाने तस्याकारणत्वादिदमसंगतमिति चेन्न, जन्यज्ञानसामान्य म्प्रत्येव तस्यकारणत्वाङ्गीकारात्, नच मानाभाव स्तत्र शङ्क्यः, सुषुप्तौ पुरीतति वर्तमानेन मनसा ज्ञानाजननस्यैव मानत्वात्, ननु सुषुप्तिकालेऽनुभवसामग्र्य भावा ज्ञानुभवः स्या त्तद्यथा आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन ततः प्रत्यक्षम्, तथा च, तदानीं चक्षुरादिना मनोयोगाभावान्न प्रत्यक्षम्, ननुमाभूद्बहिरिन्द्रियजन्यप्रत्यक्ष म्मानसप्रत्यक्षं स्यादेवेति चेन्न, तदानीं ज्ञानादेरभावेन तत्प्रत्यक्षस्याप्यसम्भवात्, नन्वात्मनोविभुत्वा न्मनःसंयोगस्य तदानीमपिसत्वादात्मप्रत्यक्षं स्यादिति चेन्न "अध्यक्षो विशेषगुणयोगतः" इत्यनेन ज्ञानादेरभावे तत्प्रत्यक्षाभावस्योक्तत्वात्, ननु माभू त्प्रत्यक्षमनुमितिस्तु स्यादिति चेन्न, व्याप्तिज्ञानाभावेन तस्या अप्यभावात्, सादृश्यज्ञानपदज्ञानयोरभावा न्नोपमितिशाब्दबोधावित्येवमनुभवसामग्र्यभावः, माभूदनुभवः स्मृतिस्तुस्यादेवेति चेन्न, तदानीं स्मरण स्यानुभवसिद्धत्वाभावेन फलवलकल्प्योद्बोधकाभावसत्वेन तस्याप्य भावात्, अतस्तदानीं ज्ञानसामग्र्यभावेनैव न किमपि ज्ञानं भवति तत्कथं तदानीं तदभावेन त्वङ् मनोयोगस्य तत्प्रति कारणत्वं कल्प्यत इतिचेन्न, स्वप्नावस्थानन्तरं जायमानसुषुप्तौ तत्प्राक्कालोत्पन्नज्ञानादेस्तदुत्पत्तिकालेऽपि तत्सत्वेन तत्प्रत्यक्षापत्तेः, तत्संयोगादात्मनोऽपि प्रत्यक्षापत्तेश्च । ननु सुषुप्तिप्राक्कालीनज्ञानस्य निर्विकल्पकरूपत्वात् तदतीन्द्रिय

त्वमुभयेषां समानमेवेति चेन्न, तस्य निर्विकल्पकत्वे मानाभावा त्तस्य निर्विकल्पकत्वाभावे ऽप्यतीन्द्रियत्वमिति चेन्न, तत्रापि मानाभावात्। ननु त्वङ्मनःसंयोगस्य ज्ञानसामान्ये हेतुत्वे रासनचाक्षुषादिप्रत्यक्षकालेऽपि स्पार्शनप्रत्यक्षं स्यात्, नच तत्सामग्र्यभावः, विषयत्वक्संयोगत्वङ्मनः संयोगयोः सत्वात्, ननु चाक्षुषादिसामग्र्याः स्पार्शनप्रतिबन्धकत्वादेव न स्यादिति चेन्न, विनिगमनाविरहेण त्वाचसामग्र्या अपि चाक्षुषादिप्रतिबन्धकत्वापत्तेरिति चेन्न, निरुक्तदिशा त्वङ्मनःसंयोगस्य ज्ञानहेतुत्वे सिद्धे ऽनुभवानुरोधेन चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धत्वकल्पनात्, युगपत्सर्वमेव ज्ञानन्तु न, ज्ञाने मनःकारणत्वेन तस्याणुत्वादेकदैव-सर्वेन्द्रियसम्बन्धाऽभावात्, नापि सुन्दोपसुन्दन्यायेन परस्परप्रतिबन्धकत्वम्, प्रदीपादिवद्विरोधिनामपि भोगवैचित्र्येण बाध्यबाधकत्वाभावात्, वस्तुतस्तु सुषुप्तौ ज्ञानाभावानुरोधेन जन्यज्ञानसामान्यम्प्रति चर्ममनः संयोगस्यैव हेतुत्वम्, परस्परप्रतिबन्ध्यप्रतिबन्धकभावशङ्कापि न, चाक्षुषादि प्रत्यक्षप्रमितिकाले त्वङ्मनोयोगाभावेन त्वाचप्रत्यक्षाभावादित्यन्यत्रविस्तरः।

## (४८) किं स्वरूपं निर्विकल्पकज्ञानं तत्प्रत्यक्षं भवति नवा तत्स्वीकारे च का युक्तिः ?

अयम्भावः—निर्विकल्पकसविकल्पकभेदेन प्रत्यक्षादिज्ञानं द्विविधम्, तत्र प्रकारताशून्यत्वे सति ज्ञानत्वं, विशेष्यताशून्यत्वे सति ज्ञानत्वं, संसर्गताशून्यत्वे सति ज्ञानत्व, मिति विनिगमनाविरहेण लक्षणत्रयं निर्विकल्पकज्ञानस्य। ननु निर्विकल्पस्य निर्विषयकत्वापत्तिरिति चेन्न, तस्य तुरीयविषयतास्वीकारेणाऽदोषात्, नच तत्सद्भावे मानाभाव इति वाच्यम्, अयंघटइति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्ट ज्ञानत्वाद् दण्डीतिज्ञानव दित्यनुमानस्यैव तत्र मानत्वात्, नच व्यभिचारः शङ्क्यः, विशिष्टबुद्धिम्प्रति विशेषणज्ञानस्य कारणत्वात्, तथाहि घटचक्षुःसंयोगानन्तरं घटत्वप्रकारकतद्वद्विशेष्यक मयंघटइति विशिष्टज्ञानं

न भवितुमर्हति, तज्ज्ञानात् प्राग् घटत्वज्ञानाऽभावात्, ननु माभूत्तज्ज्ञानं विशिष्टज्ञानं जायतामिति चेन्न, "नागृहीतविशेषणा बुद्धिर्विशिष्ट उपजायते" इतिनियमेन विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वात्, एवञ्च प्रथमं घटघटत्वयो र्विशेष्यताविशेषणतासंसर्गत्वानवगाहि ज्ञानं जायते तदेव निर्विकल्पकमुच्यते, तत्प्रत्यक्षन्तु न, तथाहि प्रथमं निर्विकल्पकं ज्ञानं, ततः सविकल्पकम्, ततोऽनुव्यवसायः, ज्ञानविषयकं ज्ञान मनुव्यवसाय-इत्युच्यते, तत्र घटमहं जानामीत्यनुव्यवसाये, आत्मनि ज्ञानं, तत्र घटः तत्र घटत्वं, प्रकारतया भासते, ज्ञानविशेषणीभूते घटे यद्विशेषणं घटत्वं तद्वि-शेषणतावच्छेदक मित्युच्यते, विशेषणतावच्छेदकप्रकारकं ज्ञान मयंघट इति, तद्घटमहंजानामीतिविशिष्टवैशिष्ट्यात्मके ऽनुव्यवसाये कारणं भवति, निर्वि-कल्पके च घटत्वादे र्न प्रकारतया भानम्, ततोघटत्वादिविशिष्टघटादि वैशिष्ट्यभानं ज्ञाने न सम्भवति, ननु विशेषणमविषयीकृत्यैव घटा-दिविशिष्टज्ञानं जायतामिति चेन्न, जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमेन तादृशज्ञानाऽसम्भवात्। ननु विशेष्ये विशेषण-मिति रीत्यैव निर्विकल्पकानुव्यवसायो भवत्विति चेन्न, रक्तःपटो घटो-द्रव्यमिति समूहालम्बनानन्तरं रक्तं घटं जानामीत्यनुव्यवसायापत्त्या विशि-ष्टवैशिष्ट्यविषयताशून्यज्ञानानुव्यवसायानङ्गीकारात्, तत्सिद्धं निर्विकल्-पकस्य न प्रत्यक्षमिति, "तदुक्तं ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रि-यमिष्यते" इति शुभम्।

## ( ४९ ) षड्विधप्रत्यक्षे महत्त्वस्य केन सम्बन्धेन हेतुत्वम् ?

अयमभिसन्धिरत्र "महत्त्वं षड्विधे हेतुः" इत्यनेन चाक्षुषादिषड्-विधप्रत्यक्षे महत्त्वस्य हेतुत्वमुक्तम्, नन्विदमसंगतं श्रोत्रघ्राणरसनेन्द्रियै-र्गुणादेरेव प्रत्यक्षत्वेन तत्र च महत्त्वस्याऽभावः, गुणादौ गुणानङ्गीकारा-दिति चेन्न, महत्त्वस्य द्रव्यसमवेतप्रत्यक्षं प्रत्यपि हेतुत्वेन तज्जन्यतावच्छे-दकं द्रव्यसमवेतप्रत्यक्षत्वं तत्र च श्रावणाद्यन्यद्रव्यसमवेतप्रत्यक्षत्वस्य

कार्यतावच्छेदकत्वकल्पने गौरवात्, तत्र विषयतया द्रव्यप्रत्यक्षम्प्रति समवायसम्बन्धेन महत्त्वस्य हेतुत्वं, द्रव्यसमवेतगुणकर्मसामान्यानां प्रत्यक्षम्प्रति स्वाश्रयसमवायसम्बन्धेन तस्य हेतुत्वम्, स्वं महत्वं तदाश्रयो द्रव्यं तत्र समवायो गुणादीनां, द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षम्प्रति स्वाश्रयसमवेतसमवायसम्बन्धेन तस्य हेतुत्वम् स्वं महत्वं तदाश्रयो द्रव्यं तत्समवेते गुणकर्मणी तत्र गुणत्वादेः समवाय इत्येवं महत्त्वस्य प्रत्यक्षे हेतुत्वमिति शिवम्।

## (८०) किं तावदिन्द्रियत्वम्?

चाक्षुषादिषड्विधप्रत्यक्षे "इन्द्रियं करणमि" त्युक्तम्, तत्रेन्द्रियत्वन्न जातिः, पृथिवीत्वाऽभावसमानाधिकरणेन्द्रियत्वं रसनादा, विन्द्रियत्वाभावसमानाधिकरणं पृथिवीत्वं घटादौ, तयोर्घ्राणेन्द्रिये सत्वेन सांकर्यात्, किन्तर्हीन्द्रियत्वमितिचे च्छब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वं तत्वमिति गृहाण, आत्मादे र्ज्ञानकारणमनःसंयोगाश्रयत्वा त्तत्रातिव्याप्तिवारणाय सत्यन्तम्, श्रोत्रे उद्भूतविशेषगुणस्य शब्दस्य सत्वा त्तत्रा व्याप्तिवारणाय शब्देतरेति, नन्वेवं शब्देतरविशेषगुणानाश्रयत्वे सतीति वक्तव्ये विशेषगुणस्योद्भूतत्वविशेषणं व्यर्थमित्ति चेन्न, चक्षुरादौ विशेषगुणस्यानुद्भूतरूपादेः सत्वेन तत्राव्याप्तिवारणाय तत्र तद्विशेषणस्यावश्यकत्वात्। नन्वेवं चक्षुरादौ शब्देतरगुणानाश्रयकथनेनापि निर्वाहे गुण विशेषणं विशेषपदं किमर्थमितिचेत् संयोगादिमादायाऽसंभववारणाय तत्सार्थक्यमित्यवेहि, तथाहि शुक्लत्वाभावसमानाधिकरण-मुद्भूतत्व मुद्भूतगन्धे, उद्भूतत्वाऽभाव समानाधिकरणं शुक्लत्वं रसनेन्द्रियादिरूपे तयोरेकत्र शङ्खादौ सत्त्वेन सांकर्य्यादुद्भूतत्वन्न जातिः, ननु शुक्लत्वव्याप्यं नानैवोद्भूतत्वं तथा च शुक्लत्वव्याप्यं यदुद्भूतत्वं तन्न शुक्लत्वाभावसमानाधिकरणमिति न साङ्कर्य्यमिति चेन्न, तथा सति चाक्षुषप्रत्यक्षम्प्रति शुक्लत्वादिव्याप्यनानोद्भूतत्वस्य कारणतावच्छेदकत्वे ऽनुगतकारणतानापत्तेः, तत्कल्पनेऽपि व्यभि-

चाराच्च, किन्त्वनुद्भूतत्वमितिचेच्चक्षुरत्वादिव्याप्यमनुद्भूतत्वं नाना तदभावकूटश्चोद्भूतत्वम्, तच्च संयोगादावप्यस्ति, एवञ्च शब्देतरोद्भूतगुणः संयोगादि स्तदाश्रयत्वमेव चक्षुरादौ नत्वनाश्रयत्वमिति. नन्वेवं विशेषणांशेनैव निर्वाहे विशेष्यांशोव्यर्थ इति चेन्न, शब्देतरोद्भूतविशेषगुणानाश्रयत्वेन कालादा वतिव्याप्तेः, तत्रैवातिव्याप्तिवारणाय विशेष्यदले ज्ञानकारणेति च, इन्द्रियावयवविषयावयवसंयोगस्यापि प्रत्यक्षे कारणत्वा त्तत्रातिव्याप्तिवारणाय मनःपदम्, यद्यपि प्राचीनमते प्रत्यक्षम्प्रति तदवयवयोः कारणत्वा त्तत्राऽतिव्याप्तिवारणय मनः पदप्रयोजनम्, नव्यमते न तत्प्रयोजनम्, तैस् तादृशकारणतानङ्गीकारात्, तथापि तन्मते कालादौ रूपाभावप्रत्यक्षे विशेष्यविशेषणभावरूपसन्निकर्षघटकतया कारणीभूतचक्षुः संयोगाश्रयस्य कालादे र्वारणाय मनः पदम्., नचात्मान्यत्वे सतीत्यनेनैवास्मन्यतिव्याप्तिवारणसंभवे किं पुनर्गुरुतरेण शब्देतरोद्भूतविशेषणदानेनेति वाच्यम्, तथासति चर्ममनःसंयोगस्य ज्ञानमात्रम्प्रतिहेतुत्व मितिमते तत्रातिव्याप्तिवारणाय तत्सार्थक्यादित्यन्यत्र विस्तरः ।

## (५१) षोढा सन्निकर्षाः सोदाहरणा निरूप्यन्ताम् ?

अयम्भावः—षड्विधप्रत्यक्षे इन्द्रियं करणमुक्त्वा "विषयेन्द्रिय सम्बन्धो व्यापार" इत्युक्तम्, तत्र कारणत्वं व्यापारवत्वे सत्यसाधारण कारणत्वरूपं तद्घटकव्यापारत्वञ्च तज्जन्यत्वे सति तज्जन्यजनकत्वरूपं, यद्यपि श्रोत्रशब्दसम्बन्धरूपे समवाये तन्नास्ति समवायस्य नित्यत्वा त्तथाप्यत्र व्यापारः सन्निकर्ष इत्युच्यते, तेच संयोगः, संयुक्तसमवायः, संयुक्तसमवेत समवायः, समवायः, समवेतसमवायः, विशेष्यविशेषणभावश्चेति, क्रमशः द्रव्य द्रव्यसमवेत द्रव्यसमवेतसमवेत शब्द शब्दसमवेत समवायाभाव प्रत्यक्षेषु कारणानि, तदुक्तम् "द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः । द्रव्येषु समवेतानां, तथातत्समवायतः । तत्रापि समवेतानां, शब्दस्य समवायतः । तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।

विशेषणतया तद्वद्भावानां ग्रहो भवेत्" इति, तथाहि द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षम्प्रति संयोगः सन्निकर्षोहेतुः, एवं द्रव्यसमवेतजातिगुणकर्मप्रत्यक्षम्प्रति संयुक्तसमवायः, द्रव्यसमवेतसमवेत गुणत्वकर्मत्वप्रत्यक्षम्प्रति संयुक्तसमवेतसमवायः, शब्दप्रत्यक्षम्प्रति समवायः, शब्दत्वप्रक्षम्प्रति समवेतसमवायः, समवायाभावप्रत्यक्षम्प्रति विशेष्यविशेषणभावः। ननु द्रव्यप्रत्यक्षे इन्द्रियसन्निकर्षत्वेन हेतुत्वे त्वक्प्रभासंयोगा च्चाक्षुषापत्तिः, अन्धकारेघटचक्षुःसंयोगात् स्पार्शनापत्तिश्चेति चेन्न, द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषप्रत्यक्षम्प्रति चक्षुः संयुक्तसमवायस्येत्यादि विशिष्य कार्यकारणभावेनादोषादितिशिवम्।

(५२) पार्थिव परमाणुनीले नीलत्वस्य पार्थिवपरमाणौ पृथिवीत्वस्य वायौ तदीयस्पर्शादौ सत्तायाः पृष्ठत आलोकसंयोगे ऽग्रत श्चक्षुःसंयोगे घटस्य च चाक्षुषप्रत्यक्षं कुतो न ?

अत्रेदमाकूतम्? नन्वात्मप्रत्यक्षानुरोधेन मनःसंयोगस्य ज्ञानादिप्रत्यक्षानुरोधेन मनःसंयुक्तसमवायस्य च प्रत्यासत्तित्वेऽपि चक्षुरादिसंयोगतत्संयुक्तसमवाययो स्तत्वे मानाभावः। नचैवं त्र्यणुकादेस्तदीयरूपादेश्चाक्षुषानापत्तिरिति वाच्यम्, चक्षुःसंयुक्तसमवेतसमवायेनैव तत्प्रत्यक्षसम्भवात्, चक्षुःसंयुक्तः परमाणुः तत्र समवेतो द्व्यणुकः तत्र त्रसरेणोः समवायात्, एवञ्चक्षुःसंयुक्तोद्व्यणुक स्तत्समवेत स्त्रसरेणु स्तत्र रूपस्य समवाय इति चेन्न, तथा सति पृथिवीपरमाणुनीले नीलत्वस्य पार्थिवपरमाणौ पृथीवीत्वस्य च चाक्षुषप्रत्यक्षापत्तेः। ननु तत्रोद्भूतरूपमहत्वसम्बन्धयोर भावान्न चाक्षुषमितिचेन्न, परस्परया तयोरपि तत्र सत्त्वात्। तद्यथा घटनीले परमाणुनीलेच नीलत्वजातिरेकैव वर्त्तते, तथाचघटवृत्तिमहत्वं स्वाश्रयसमवेतसमवायसम्बन्धेन परमाणुनीलनीलत्वे ऽप्य स्त्येव, स्वं महत्वं तदाश्रयो घट स्तत्समवेतो नीलरूपं तस्य समवायो नीलत्वे परमाणुनीलनीलत्वे उद्भूतरूपन्तु परमाणुघटोभयमादाय तत्रास्ति, स्वमुद्भूतरूपं, तदा-

श्रयौ परमाणुघटौ तत्र समवेतं नीलरूपं तत्र समवायेन नीलत्वम्, एवं परमाणौ पृथिवीत्वेऽपि घटमादाय महत्त्वसम्बन्धः, एवं महत्त्वं तदाश्रयः कपालं तत्र समवेतो घट स्तत्रपृथिवीत्वसमवाय स्तथा परमाणुघटोभयमादायोःद्भूतरूपसम्बन्धो निरुक्तसम्बन्धेन, एवं वायौ सत्तायास्तदीयस्पर्शादौ तस्याश्चाक्षुषंस्यात्, निरुक्तदिशा घटादिमादाय तदुभयसत्वादिति चेन्न, उम्द्भूतरूपावच्छिन्नमहत्वावच्छिन्नो यश्चक्षुःसंयोग स्तदाश्रयसमवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे कारणत्वेन परमाणौ चक्षुःसंयोगस्य महत्वावच्छिन्नत्वाऽभावेन तद्वृत्तिपृथिवीत्वस्य चाक्षुषत्वाऽभावात्, एवञ्च त्रसरेणौ महत्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायाऽभावा त्तच्चाक्षुषानुपपत्ति रतश्चक्षुःसंयोगस्य प्रत्यासत्तित्वमावश्यकम् । नन्वेवं चक्षुःसंयुक्तसमवायः सन्निकर्षः चक्षुःसंयुक्तसमवेतसमवायेना ऽन्यथासिद्ध इति चेन्न, द्रव्यसमवेतसमवेतचाक्षुषम्प्रति निरूक्तरूपावच्छिन्नोयश्चक्षुःसंयोगस्तदाश्रय समवेतसमवायस्य कारणत्वेन पार्थिवपरमाणौ महत्वाच्छिन्नचक्षुःसंयोगाऽभावेन तदीयनीलवृत्तिनीलत्वादे श्चाक्षुषत्वाऽभावात, एवञ्च त्रसरेणुरूपे महत्वार्च्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्याभावेन तत्प्रत्यक्षानुपपत्या चक्षुःसंयुक्तसमवायेऽपि प्रत्यासत्तित्वस्यावश्यकत्वात् । पार्थिवपरमाणौ नीले नीलत्वादेरिव वायौ तदीयस्पर्शादौच सत्तायाश्चाक्षुषत्वाऽभावोऽपि, तत्र चक्षुःसंयोगस्यसत्वेऽपि रूपावच्छिन्नत्वाऽभावेन बोध्यः, नन्वेवंयत्र घटस्य पृष्ठावच्छेदेनालोकसंयोग श्चक्षुसंयोगश्चाग्रावच्छेदेन तत्र घटप्रत्यक्षं स्यादुद्भूतरूपावच्छिन्नमहत्वावच्छिन्नचक्षुःसंयोगस्या लोकसंयोगस्य च घटे सत्वादिति चेन्न, आलोकसंयोगाऽवच्छिन्नोद्भूतरूपावच्छिन्नमहत्वावच्छिन्नचक्षुःसंयोगस्य द्रव्यप्रत्यक्षे हेतुत्त्वेन तत्र चक्षुः संयोगस्यालोकसंयोगाऽवच्छिन्नत्वाभावेन घटप्रत्यक्षा ऽभावादितिशम् ।

## ( ५३ ) समवायसन्निकर्षसद्भावे का युक्ति ?

अत्रेदंतत्त्वम्—यद्यपिसांख्यैरहंकारोपादानकत्व मिन्द्रियाणा मङ्गीक्रियते तन्मते श्रोत्रेन्द्रियस्याप्यहंकारोपादानकत्वा च्छब्ददेशं गत्वैव श्रोत्रं शब्दं

गृह्णाति, चक्षुषो द्रव्यदेशं प्राप्य द्रव्यादिप्रत्यक्षवत्, तथापि स्वमते इन्द्रियाणां भूतोपादानकत्वेन श्रोत्रस्य कर्णशष्कुल्यवच्छिन्ननभःप्रदेशरूपत्वान्नभसि कर्माभावा च्छब्दरूपगुणस्यापि कर्मवत्त्वाऽभावा च्छब्दप्रत्यक्षासम्भवेन वीचीतरङ्गन्यायेन शब्दजशब्दाङ्गीकारेण श्रोत्रदेश उत्पन्नस्य शब्दस्य प्रत्यक्षं भवति, तदर्थः समवायः सन्निकर्षो ऽभ्युपगम्यते । शब्दत्वप्रत्यक्षार्थं समवेत समवायो ऽपि सन्निकर्षः—किञ्च श्रोत्रावच्छिन्नशब्दस्य गुणत्वा च्छ्रोत्रस्यच गगनरूपत्वा त्तयोःसंयोगःसन्निकर्षोनसम्भवति, नच कर्णशष्कुल्यवच्छिन्ननभसोनिरवच्छिन्ननभसश्च संयोगेन तत्समवेतशब्दस्यप्रत्यक्षं श्रोत्रसंयुक्तसमवायेन सन्निकर्षेण स्यादितिसाम्प्रतम्, एकस्यैव द्रव्यस्य सोपाधिकनिरुपाधिकभेदेन भिन्नस्य संयोगासम्भवा न्नहि घटाऽऽकाशमहाकाशयोः संयोगं केचिन् मन्यन्ते तथाच समायसन्निकर्षोऽवश्यमाश्रयणीयः । नन्वेवं सकलपुरुषाणां सर्वशब्दप्रत्यक्षापत्तिः शब्दस्य श्रोत्रस्य समवायस्य च सत्वादिति चेन्न , श्रोत्रावच्छिन्नसमवायस्य विवक्षितत्वेन यावत्पुरुषीय श्रोत्रावच्छिन्नसमवायाऽभावेनादोषात् । शब्दसमवेतशब्दत्वश्रावणप्रत्यक्षम्प्रति श्रोत्रावच्छिन्नसमवेतसमवायः सन्निकर्ष इति सर्वं चतुरस्रमितिशिवम् ।

(५४) वैशेषिकमते समवायप्रत्यक्षाऽभावं कथं कथञ्च मतान्तरे तत्प्रत्यक्षम् ?

अत्रायमभिसन्धिः—समवायाभावप्रत्यक्षसिद्धये इन्द्रियसम्बद्धविशेषणता सन्निकर्षो हेतुरङ्गीक्रियते । तदुक्तम् "प्रत्यक्षं समवायस्य विशेषणतया भवेत् । विशेषणतया तद्वदभावानां ग्रहो भवेदिति" घटसमवायवत्कपालं पश्यामीति प्रत्यये चक्षुःसंयुक्तं कपालं तद्विशेषणं समवाय इति, अत्र वैशेषिकानुयायिनः सम्बन्धप्रत्यक्षम्प्रति यावदाश्रयप्रत्यक्षस्य हेतुत्वात् , समवायस्यैकतयैकदा भाविभूतसकलाश्रयव्यक्तीनां ज्ञानासम्भवान्न तत्प्रत्यक्षम्-उक्तनियमानभ्युपगमे घटाकाशसंयोगस्यापिप्रत्यक्षापत्ति स्तत्रोक्तसन्निकर्षस्य सत्वादित्याहुः । नैयायिकास्तु यावदाश्रयप्रत्यक्षस्य न सम्बन्धप्रत्यक्षत्वं कार्यतावच्छेदकम्, सम्बन्धत्वस्य

निर्वचनाशक्यत्वात् । नच सांसर्गिकविषयतावत्त्वमेव सम्बन्धत्वमिति वाच्यम्, तादृशसम्बन्धत्वस्य घटत्वादिसाधारण्येन तत्प्रत्यक्षे व्यभिचारापत्तेः, किन्तर्हि यावदाश्रयप्रत्यक्षस्य कार्यतावच्छेदकमितिचेदनुभवानुरोधेन संयोगप्रत्यक्षत्व मेवेतिगृहाण, तथाच समवायप्रत्यक्षे बाधकाभावात्तत्प्रत्यक्षार्थ मपीन्द्रियसम्बन्धविशेषणता सन्निकर्षोऽङ्गीकार्य्य इत्याहुः ।

( ५५ ) अभावप्रत्यक्षे चरमसन्निकर्षं सङ्गमय्य तत्प्रत्यक्षे योग्यानुपलब्धे र्हेतुत्वं कथं का च सा ?

अभावप्रत्यक्षे-इन्द्रियसम्बद्धविशेषणता सन्निकर्षो हेतुः । तथाहि घटाभाववद्भूतलं पश्यामीति प्रत्यक्षे चक्षुःसंयुक्तं भूतलं तद्विशेषणं घटाभावः, रूपाऽभाववदेकत्वविशिष्टं घटं पश्यामीति प्रत्यये चक्षुः संयुक्तो घट स्तत्समवेत मेकत्वं तत्र विशेषणं रूपाऽभाव स्तथाचात्र संयुक्तसमवेतविशेषणतासन्निकर्षः, रूपाऽभाववदेकत्वत्ववदेकत्वविशिष्टघटप्रत्यक्षे संयुक्तसमवेतसमवेतविशेषणतासन्निकर्षः, चक्षुःसंयुक्तो घट स्तत्र समवेत मेकत्वं तत्र समवेतत्व मेकत्वत्वं तद्विशेषणं रूपाभावः, शब्दाभावप्रत्यक्षम्प्रति केवलश्रोत्रावच्छिन्नविशेषणता सन्निकर्षः, खत्वाद्यभावविशिष्टकादिप्रत्यक्षम्प्रति श्रोत्रावच्छिन्नसमवेतविशेषणता सन्निकर्षः, गत्वाभावविशिष्टकत्वाद्यवच्छिन्नाभावप्रत्यक्षम्प्रति श्रोत्रावच्छिन्नविशेषणविशेषणता सन्निकर्षः, पटाभाववान् यो घटाभाव स्तद्वद्भूतलमिति प्रत्यक्षे चक्षुःसंयुक्तविशेषणविशेषणता सन्निकर्षः, नन्वेवं विशेषणतावाहुल्या द्विभागोद्देशे सन्निकर्षस्य षड्विधत्वकथन मसङ्गतमिति चेन्न, विशेषणतात्वेन रूपेण विभागग्रन्थे तस्या एकत्वस्येष्टत्वात्, ननु विशेषणताया: प्रत्यासत्तित्व न्नाभ्युपेयते, नचाऽभावप्रत्यक्षानुपपत्तिरिति वाच्यम्, अनुपलब्ध्या तत्प्रत्यक्षोपगमात्, नच वाच्यम् समवायप्रत्यक्षानुरोधात् सापि स्वीक्रियत इति, तन्त्रान्तरे समवायानङ्गीकारात् । अत एवाभावप्रत्यक्षे इन्द्रियं न करणं किन्तु योग्यानुपलब्धिरेवेति मीमांसका आहुरिति चेन्न, अभावप्रत्यक्षे योग्यानुपलब्धेः कार-

यत्वेऽपि करणत्वानभ्युपगमात्। नच योग्यानुपलब्धे रभावप्रत्यक्षे हेतुत्वे मानाभाव इति वाच्यम्, भूतलादौ घटादिभ्रमानन्तरं घटाभावादिप्रमाऽभावस्याऽनुभवसिद्धतयाऽभावोपलब्धौ प्रतियोग्युपलम्भाभावस्य कारणत्वकल्पनात्। ननु जलपरमाण्वादौ पृथिवीत्वाभावप्रत्यक्षं स्या त्तत्र प्रतियोगिनः पृथिवीत्वस्योपलम्भाभावादिति चेन्न, प्रतियोगिनि योग्यताया अप्यपेक्षणात्, तत्र योग्यता च 'प्रतियोगिसत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा', प्रतियोगिनो घटादेः सत्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य तस्य भाव स्तत्वम्, तद्यथा—आलोकसंयोगादिसत्वे यद्यत्र घटः स्यात्तर्हि—उपलभ्येते त्यापादनशक्यत्वेन तत्र घटाभावादेः प्रत्यक्षं भवति, तमसि तादृशापादनासंभवा न्नघटाऽभावप्रत्यक्षम्, स्पार्शनप्रत्यक्ष न्तुस्यादेव घटस्यालोकसंयोगाऽभावेऽपि तत्प्रत्यक्षस्यापादयितुं शक्यत्वात्, गुरुत्वस्य तु न प्रत्यक्षम्, अयोग्यत्वेन तत्प्रत्यक्षापादनाशक्यत्वात्, वायावुद्भूतरूपाभावस्य, पाषाणे सौरभाभावस्य, गुडेतिक्ताभावस्य, वह्नावनुष्णत्वाभावस्य, श्रोत्रेशब्दाभावस्य, आत्मनि सुखाद्यभावस्य तत्तदिन्द्रियैः प्रत्यक्षं जायत एव, तत्तत्प्रत्यक्षापादनस्य तत्र शक्यत्वात्, त्रिविधसंसर्गाऽभावप्रत्यक्षे प्रतियोगिनः प्रत्यक्षयोग्यतापेक्षिता, अतएव द्व्यणुकाद्ययोग्यानां प्रागभावप्रध्वंसाऽभावात्यन्ताभावाना मप्रत्यक्षम्, पिशाचात्यन्ताऽभावस्यापि न प्रत्यक्षं प्रतियोगिनि पिशाचे योग्यताविरहात्, नन्वेवं संसर्गाऽभाववत् स्तम्भे पिशाचान्योन्याभावस्य प्रत्यक्षन्न स्यादितिचेन्न, अन्योन्याभावप्रत्यक्षे तदनुयोगिनि प्रत्यक्षयोग्यताया अपेक्षणात्, स्तम्भस्य च योग्यत्वा त्पिशाचान्योन्याभावस्य चाक्षुषप्रत्यक्षं भवत्येवेतिशम्।

## (५६) अलौकिकसन्निकर्षः कतिविध स्तदस्वीकारे का नुपपत्तिः ?

अत्रेदं रहस्यम्, प्रत्यक्षन्तावद्द्विविधम्, लौकिकालौकिकभेदात्। तत्राद्ये षोढासंयोगादिसन्निकर्षा निरूपिताः, द्वितीये तु त्रिविधः सन्निकर्षः सामान्यलक्षणज्ञानलक्षणयोगजधर्मभेदात्, उक्तञ्च "अलौकिकस्तु व्यापारस्त्रि-

विधः परिकीर्तितः, सामान्यलक्षणोज्ञानलक्षणोयोगज स्तथा" इति ननु धूमत्वादिरूपसामान्यलक्षणाया इन्द्रियजन्यत्वाभावा त्तस्य मूलोक्तव्यापारत्वकथन मयुक्तमिति चेन्न, तस्य सन्निकर्षपरत्वात्, नन्विन्द्रियप्रतियोगिकत्वाभावात्त दप्ययुक्तमिति चेन्न, संयोगस्येन्द्रियप्रतियोगिकत्वेन तद्धटितस्यापि तत्त्वसम्भवात्, तत्र च लक्षणपदेन स्वरूपग्रहे बहुव्रीहिणा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थः, सामान्यस्वरूपञ्चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतमिति, तथाहि यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं तज्ज्ञाने धूमत्वं प्रकार स्तथाच धूमत्वेन सन्निकर्षेण सकलधूमविषयकं "धूमा" इत्येवं ज्ञानमुत्पद्यते, ननु लाघवादिन्द्रियसम्बद्धं सामान्यं प्रत्यासत्तिरित्येव कुतोनेति चेन्न, धूलीपटलेधूमभ्रमोत्तरं सकलधूमविषयकज्ञानानुपपत्तेः, धूमत्वेन सह तत्रेन्द्रियसम्बन्धविरहात्, निरुक्तलक्षणसत्वे त्विन्द्रियसम्बद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानं तत्र धूमत्वप्रत्यासत्तेः सत्वात् सकलधूमविषयकज्ञानोपपत्तिः । नन्वेवं चक्षुःसन्निकर्षेण धूमज्ञाने जाते चक्षुःसंयोगविगमेऽपि तादृशज्ञानमादाय तज्ज्ञानप्रकारस्य धूमत्वादे धूमान्तरे सत्वा तेषां तया प्रत्यासत्त्या ज्ञानापत्तिः, नच वाच्यम् तदानेन्द्रिय सम्बद्धो धूमः, ज्ञानलक्षणात्मकप्रत्यासत्ते धूमे सत्वात्, क्षणैके तत्र सामान्यलक्षणाजन्यज्ञानस्वीकारे नो हानिरिति चेन्न, तन्मूलकज्ञानधारापत्तेरनिवार्य्यत्वादिति चेन्न, लौकिकेन्द्रियसम्बन्धस्य विवक्षणेनादोषात्। नन्वेवं सामान्यलक्षणया तदिन्द्रियेण ज्ञाने जननीये तदिन्द्रियजन्यतदिन्द्रियालौकिकसन्निकर्षवद्विशेष्यकज्ञानप्रकारीभूतं सामान्यमिति विवक्षायामणुत्वेन यत्किञ्चिदणूपस्थितावणुत्वसामान्यलक्षणया सकलाणुगोचरो बोधो न स्यादिति चेन्न, बहिरिन्द्रियेण तथा ज्ञाने जननीये एव लौकिकत्वस्य विवक्षणात्। नन्वेवं सामान्यस्य जातिरूपत्वेन धूमत्वलक्षणप्रत्यासत्त्या निखिलधूमज्ञानेऽपि एकस्य घटस्य संयोगेन भूतले समवायेन वा कपाले ज्ञाने तदनन्तरं तद्धटवतां भूतलकपालादीनां ज्ञानानापत्ति, घटस्य सामान्यत्वाभावादिति चेन्न, सामानां भाव इति विग्रहनिष्पन्नसामान्यशब्दस्य

नित्यानित्योभयपरत्वेनादोषात्, नन्वेवं तया प्रत्यासत्त्या समवायेन तद्घटवतां भूतलानां, संयोगेन तद्वतां कपालानाञ्च प्रत्ययः कुतो नेति चेन्न, येन सम्बन्धेन सामान्यज्ञानं तेनैव सम्बन्धेनाधिकरणानां प्रत्यासत्तित्वस्वीकारात् । नच यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यस्य घटस्य तदानीमभावेन सर्वेषां तद्घटवतां भानानापत्तिः, पूर्वदिने इन्द्रियसम्बद्धविशेष्यकं घटइति ज्ञानं यत्र जातं तत्रेन्द्रियसम्बन्धं विनापि तादृश ज्ञानप्रकारीभूतसामान्यस्य सत्वात् परदिने तादृशज्ञानापत्तिश्चेति चेन्न, लक्षणशब्दस्य विषयपरत्वेन सामान्यं लक्षणं विषयो यस्येत्यर्थे, सामान्यविषयकं ज्ञानं प्रत्यासत्ति रिति स्वीकारेणापत्त्यनुपपत्त्यभावात्, तदुक्तम्, "आसत्तिरा श्रयाणान्तु सामान्य ज्ञानमिष्यते" इति सामान्यज्ञान माश्रयाणां धूमत्वादिसामान्याश्रयाणां धूमादीनां प्रत्यासत्तिःसन्निकर्ष इति । इन्द्रियसम्बद्धविशेष्यकसामान्यप्रकारकं ज्ञानं प्रत्यासत्तिरिति निष्कर्षः, ननु यत्र चक्षुः संयोगादिकं विनापि सामान्यस्मृत्यादि स्तत्रापि सकलघटादीना मलौकिकचाक्षुषप्रत्यक्षापत्तिरिति चेन्न, इन्द्रियसम्बद्धविशेष्यकसामान्यप्रकारकतदिन्द्रियजन्यज्ञानं प्रत्यासत्तिरिति स्वीकारेण ज्ञाने तदिन्द्रि यजन्यत्वाभावेना पत्ते रभावात्, नन्वन्धकारादावपि चक्षुरादिनातादृशज्ञानं जायतामिति चेन्न, तत्र ज्ञाने चक्षुःसंयोगालोकसंयोगादिरूपसामग्र्या अप्यपेक्षणात्, तदुक्तम् "तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्षत" इति । इतिसामान्यलक्षणप्रत्यासत्तिः ।

( ५७ ) सामान्यलक्षणाज्ञानलक्षणाप्रत्यासत्त्योः को भेदोऽन्यतरेणापरस्या गतार्थत्वं कुतो नेत्यवान्तरप्रश्नः ?

अत्रेदंतत्वम्, सामान्यलक्षणप्रत्यासत्ते रन्ततः सामान्यविषयकं ज्ञानमेव रूपम्, ज्ञानलक्षणप्रत्यासत्तेरपि ज्ञानं लक्षणं स्वरूपं यस्या इति विग्रहेण ज्ञानरूपं सिद्धन्तथाचान्यतरयैव सर्वेष्टसिद्धा वलमपरया प्रत्यासत्त्येति चेन्न, सामान्यलक्षणप्रत्यासत्त्या सामान्याश्रयधूमादे र्ज्ञानजननम्, ज्ञानलक्षण

प्रत्यासत्या घटवद्भूतलमित्यादौ यद्घटादिविषयकंज्ञानं तस्यैवघटादे र्नतु देशान्तरीयादे र्ज्ञानजननमित्युभयोर्भेदात्, तदुक्तम् "विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षण" इति यस्य घटवद्भूतल मित्यादौ घटादे र्विषयी ज्ञानं तस्यैव घटादेः सामान्यस्य व्यापारः सन्निकर्षो ज्ञानलक्षणाप्रत्यासत्तिरित्यर्थः, ननुसामान्यलक्षणप्रत्यासत्तिस्वीकारे किं बीजमिति चेदुच्यते, प्रत्यक्षविषयतायाः सन्निकर्षाश्रयत्वव्याप्यत्वात् सन्निकर्षं मन्तरा प्रत्यक्षप्रमीयविषयता न सम्भवति तथाचैकस्मिन्नेव धूमे चक्षुः सन्निकर्षो न धूमान्तरे तत्कथं "धूमा" इति ज्ञान मतो धूमत्वलक्षणप्रत्यासत्यैव सकलधूमप्रतीत्युपपत्ति रेवंवह्नित्वलक्षणप्रत्यासत्त्या सकलवह्नीनाम्, ननुसकलधूमवह्निज्ञानाभावेऽपि क्षत्यभावे किमिति तदुपपाद्यत इति चेन्न, प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वात्, देशान्तरीयस्य तस्य प्रत्यक्षाभावात् धूमोवह्निव्याप्यो न वेति संशयानुपपत्तिप्रसङ्गात्, संदेहस्य चानुभव सिद्धत्वात्, सामान्यलक्षणास्वीकारेतु तया सकलधूमोपस्थितौ देशान्तरीय कालान्तरीयधूमे वह्निव्याप्यत्वसंशय उपपद्यते, नन्वेवं प्रमेयत्वेन पदार्थं जातस्योपस्थितौ सर्वे सर्वज्ञाः स्युरिति चेन्नैवम्, प्रातिस्विकरूपेण सकल तत्तत्पदार्थाज्ञातत्वेन प्रमेयत्वेन सकलप्रमेयज्ञानेऽपि सार्वज्ञापत्तेरभावात्, नन्वस्तु तर्हि सामान्यलक्षणा ज्ञानलक्षणास्वीकारे मानाभाव इति चेन्न, सुरभिचन्दनखण्डमिति ज्ञाने तदस्वीकारे ।चन्दनखण्डांशे लौकिकचाक्षुषप्रत्यक्षस्वीकारेऽपि सौरभांशे योग्यवृत्तित्वविशिष्टचक्षुःसंन्निकर्षा ऽभावेन तत्प्रत्यक्षानापत्तेः, तत्स्वीकारे तु स्वसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वसम्बन्धेन सौरभांशेऽपि चक्षुःसन्निकर्षसत्वा त्तत्प्रत्यक्षोपपत्तिः स्वंचक्षुःशेषंस्पष्टम्, ननु सुरभिचन्दनमिति प्रत्यक्षे सौरभत्वप्रकारकज्ञाने सामान्यलक्षणप्रत्यासत्यैव सौरभत्वाश्रयसौरभभानं संभवति तत्किं ज्ञानलक्षणास्वीकारेणेति चेन्न, प्रमेयत्वादिसामान्यलक्षणया प्रमेयत्वादिना सौरभत्वभानसंभवेऽपि ज्ञानलक्षणानङ्गीकारे स्वरूपतः सौरभत्वभानासम्भवात्, धूमत्वेनधूलीपटले ज्ञाने तदनन्तर मनुव्यवसाये "मनःसंयुक्तात्म-

समवेतज्ञानविषयत्वसम्बन्धेन" धूलीपटलस्य भानार्थन्तस्या आवश्यकत्वाच्च, अन्यथा तत्र धूमत्वज्ञानरूपसामान्यलक्षणायाः स्वविषयधूमत्वाश्रयत्वसम्बन्धेन धूलीपटलेऽभावेन सामान्यलक्षणयाऽनुव्यवसाये धूलीपटलभानासम्भवः स्यादिति शिवम् । इति ज्ञानलक्षणाप्रत्यासत्तिः ।

## (५८) योगजसन्निकर्षः कतिविध स्तस्य कुत्रपदार्थेऽन्तर्भावः इत्यवान्तरप्रश्नः ?

अत्रायमभिसंधिः, योगिभिरहङ्कारोपादानकत्वमिन्द्रियाणां मन्यतेऽहंकारस्य च व्यापकत्वा द्देशान्तरेऽपि सत्त्वं ततो योगीन्द्रियाणां सर्वत्रैव सत्वात् सर्वत्र सर्वदा प्रत्यक्षं, नच वाच्यं योगिवत् सर्वेषां सर्ववस्तुभानप्रसङ्ग इति, योगिनां योगमहिम्ना सत्वाविर्भावेन तमोनिरासेन तत्संभवेऽपि तदितरेषां तमोबाहुल्यप्रतिबन्धकवशात् तथाभानासम्भवात्, उक्तंहि योगभाष्ये "कार्येन्द्रियप्रकृतयश्चस्वंस्वं विकारमनुगृह्णन्त्यापूरेण धर्मादिनिमित्तमपेक्षमाणा" इति । स्वमते चेन्द्रियाणाम्भौतिकत्वाद्द देशान्तरेऽसत्वा त्तत्रत्यपदार्थाना म्भानाप्रसक्ति रतो योगजोऽपिसन्निकर्षोऽङ्गीक्रियते तार्किकैः, सच चित्तवृत्तिनिरोधात्मकयोगाभ्यासजनितो धर्मविशेषरूपः—श्रुतिपुराणादिप्रतिपाद्यः, सोऽपियुक्तयुञ्जानयोगिद्वैविध्याद्द युक्तयुञ्जानरूपोद्विविधः । तत्र मनोजन्यधर्माश्रयसंयोगो द्रव्यप्रत्यक्षेकारणम्, द्रव्यत्वादिप्रत्यक्षे तदाश्रयसंयुक्तसमवायः, रूपत्वादिप्रत्यक्षे च तदाश्रयसंयुक्तसमवेतसमवाय इत्यादि, यद्यपि न योगमात्रः सन्निकर्ष स्तथापितद्घटितत्वा त्तेन शब्देन व्यवह्रियते सामान्यलक्षणादिव त्तथाचोक्तम् "योगजोद्विविधः प्रोक्तो युक्तयुञ्जानभेदत" इति तत्र युक्तयोगिनो ध्यानाद्यभवेऽपि युक्तरूपयोगजधर्मेण सन्निकर्षेण विषयभानं भवति, युञ्जानयोगिनो ध्यानादिसचिवेन युञ्जानसन्निकर्षेण सर्वविषयभानं तदप्युक्तम् "युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपर" इति योगजसन्निकर्षस्य योगमाहात्म्यलभ्यत्वा द्यागादिभिर-

दृष्ट इव योगजन्योऽदृष्टो धर्मरूप एवेति गुणेऽन्तर्भावो न पदार्थान्तरमिति सिद्धम् ।

छात्राणां हृदयाकाशे प्रकाशेन प्रकाशिते ।
मुक्तावली विलसतु विश्वनाथार्पिता सती ॥ १ ॥

इति श्री नारायणदत्तशर्म्मत्रिपाठिविरचिते प्रश्नोत्तररूपे सिद्धान्तमुक्तावलीव्याख्याने प्रकाशे प्रत्यक्षखण्डात्मकः प्रथमो भागः सम्पूर्ण इति शिवम् ।

"श्रीसाम्बशिवार्पणमस्तु"



॥ श्रीगणेशायनमः ॥

# मुक्तावलीप्रकाशः



## प्रश्नोत्तररूपः ।

यत्कृपालेशतः सूनु र्मृकण्डो रमरत्वभाक् ।
तं सर्वज्ञं शिवं वन्दे गोमतीगङ्गया युतम् ॥१॥

### (१) शाब्दबोधप्रकारं निरूपय ?

अथात्मनिरूपणावसरे "विभुर्बुद्ध्यादिगुणवा" नित्युक्तं तत्र बुद्धिभेदनिरूपणावसरे प्रत्यक्षानुमित्युपमितिशाब्दबोधात्मकान् तद्भेदानुत्क्वा क्रमशः प्रथमत्रयं निरूप्य शाब्दबोधनिरूपणावसरे शाब्दप्रमायाः पदज्ञानं करणम्, पदार्थोपस्थितिरूपस्तद्व्यापारः, शक्तिज्ञानं सहकारीति शाब्दप्रमाया विधा। "पदज्ञानंतुकरणं द्वारं तत्र पदार्थधीः। शाब्दबोधः फलन्तत्र शक्तिधी स्सहकारिणी"तिकारिकयानिरूपिता । ननुशाब्दबोधे ज्ञायमानपदस्यैव करणत्वंयुक्तम्, तत्कालिकज्ञानविषयशब्दे तत्त्वस्यानुभवसिद्धत्वादिति चेन्न, करणस्य व्यापारवदसाधारणकारणात्मकस्य कारणत्वेन शाब्दप्रमा रूपकार्य्यात् प्राक् कार्य्याधिकरणात्मनि पूर्ववृत्तित्वावश्यकत्वेनविशेष्यतया पदस्यैव कारणत्वे तस्य च श्रावणज्ञानविषयरूपतया मौनिश्लोकादौ हस्तादिचेष्टया द्वित्वादिज्ञानादौच तादृशपदाभावेन शाब्दबोधानापत्तेः ममतु तद्विषयकज्ञानस्यैव करणत्वेन स्मृत्यादिरूपस्य तस्य तत्रापिसत्वा च्छाब्दप्रमोत्पत्तौ बाधकाभावः । पदज्ञानस्यकरणत्वे तस्य च व्यापारवत्त्वनिय-

माद्व्यापारः क इति चेत्, पदार्थोपस्थिति रित्यवेहि, तस्याः पदज्ञानजन्यत्वेन-पदज्ञानजन्यशाब्दबोधजनकत्वात् । किमिति तस्या व्यापारत्वमिति चेद्-अन्वयव्यतिरेकसहकारात् । तथाहि प्रत्यक्षादिना पदार्थज्ञानसत्वेऽपि पद-जन्यपदार्थोपस्थिति मन्तरा शाब्दबोधाभाव स्तत्सत्त्वे प्रत्यक्षादिसहकारा भावेऽपि शाब्दबोधः । नन्वेवंघटादिपदादाकाशे समवायेन स्मृते तस्यापि शाब्दापत्ति स्तादृशोपस्थितिसत्वादितिचेन्न, पदजन्यपदार्थोपस्थितिघटक पदजन्यत्वस्य वृत्त्या तज्जन्यत्वस्य विवक्षितत्वेन प्रकृते आकाशस्य तादृशो पस्थितेरभावेन निरुक्तदोषाभावात् । ननुवृत्तेश्शक्त्यात्मकत्वे गङ्गादिपदा-त्तीरादे र्बोधानापत्ति स्तत्र शक्त्या पदार्थोपस्थितेरभावादिति चेन्न, शक्ति-लक्षणान्यतरात्मकपदपदार्थयोः सम्बन्धस्य वृत्तिरूपत्वेन द्वितीयवृत्ते स्तत्र स-त्त्वेन शाब्दक्षतेरभावात् । ननुशक्तेःपदार्थस्य भवता खण्डिततया पदपदार्थ-यो स्तदङ्गीकार इति कोऽयंप्रकार इति चेन्न, अस्माच्छब्दादयमर्थो बोद्धव्य इति भगवदिच्छायाश्शक्ति रूपत्वेन गुणे तदन्तर्भाविणेदानीमपि मया तस्याः पदार्थान्तरानङ्गीकारात् । नन्वनादिपरम्परासिद्धघटादिशब्दे तादृशेच्छा-रूपतदीयेच्छाया स्सत्वेऽपि पित्रादिसङ्केतिताधुनिके नाम्नि तदभावात् तेभ्योबोधानापत्तिरितिचेन्न, "एकादशेऽहि पिता नाम कुर्यादि"ति-श्रुते रेकादशदिनकालीनपित्रुच्चारणविषयनामत्वेन सामान्यरूपेण तत्राऽपित-त्सत्वात् । नन्वेवं नदीवृद्धयादिपदे तादृशेच्छाया अप्यभावेन तत्रशक्तिर्न-सिध्येदितिचेन्न, तत्र तदभावस्येष्टत्वात् । ननु नद्यादिपदे तदभावे शक्तिरूप-कारणाभावाद्बोधएव ततो नस्या त्तत्वस्याचानुभवसिद्धत्वादिति चेन्न, वस्तुत इच्छामात्रस्यैव तत्त्वेन तस्यास्तत्रापि सत्वेन बोधानुपपत्यभावात् । नचैवमपभ्रंशात्मकशब्दादपिबोधापत्ति स्सन्मात्रविषयिण्या भगवदिच्छाया-श्शक्तेस्तत्रापिसद्भावादिति वाच्यम्, साधुशब्दे एव तदङ्गीकारेण तत्र शक्ति भ्रम मन्तरा तात्त्विकबोधानङ्गीकारात् । एवञ्च प्रथमं शक्ति ग्रह स्ततः कालान्तरे तत्पदश्रवणे एकसम्बन्धिज्ञान-मपरसम्बन्धिस्मारक मितिविधपदार्थोप-स्थितिः, ततश्शाब्दबोधइति सिद्धम् ॥

(२) शक्तिग्राहकाः के ते सोदाहरणं प्रदर्शनीयाः?

अयमभिसन्धि रत्र, शाब्दबुद्धौ शक्तिज्ञानं सहकारिकारण मुक्तम् शक्तेः स्वरूप मप्युक्तम्, तद्ग्राहका व्याकरणादय स्तथाहि "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यत स्सिद्धपदस्य वृद्धा" इति, धातुप्रातिपदिकप्रत्ययादीनां शक्तिग्रहो "भूसत्तायां" "कर्त्तरिकृत्" "तस्यापत्यम्" "प्रातिपदिकार्थे प्रथमे" त्यादिशब्दानुशासनाद् भवति। ननु लः कर्मणीतिसूत्रेण शाब्दिकै र्लकाराणां शक्तिः कर्त्तरि स्वीकृता चैत्रःपचति-इत्यादौ कर्त्रा सह चैत्रादे रभेदान्वयः कर्तृत्वञ्च कृतिरूपं तस्यच शक्यतावच्छेदकत्वे गौरवमिति चेन्न, तत्र गौरवभिया सूत्रे भावप्रधाननिर्देशेन च, कृतावेवशक्तिरिति तार्किकसिद्धान्तात्। एवञ्च कृतित्वस्य जातिरूपत्वेन तस्याऽवच्छेदकत्वे लाघवम्। कृतेश्च प्रथमान्तार्थे प्रकारतयाऽन्वयः, प्रथमान्तार्थे आख्यातार्थसंख्यायाः, कृतौ प्रकारतया कालस्य तत्रैव धात्वर्थव्यापारस्य, व्यापारे धात्वर्थफलस्य, तथाच विक्लित्यनुकूलव्यापरानुकूलवर्तमानकालिककृतिमानेकत्वविशिष्ट श्चैत्र इतिबोध श्चैत्रःपचतीत्यत्र। नन्वेवमाख्यातेन कर्तुरनुक्तत्वाच् चैत्रादे स्तृतीयापत्ति र्ममतु कर्तुरभिधाना त्तेना नभिहितत्वाभावान्न सेति चेन्न, यत्र कर्तृनिष्ठसंख्याया आख्यातप्रत्ययेना ऽनभिधानत्वन्तत्रैव तस्या अङ्गीकारेण प्रकृते तथात्वेनादोषात्। ननु कर्तृसंख्याऽभिधाने एव प्रयोजका ऽभाव इति चेन्न, कर्म्मत्वाद्यनवरुद्धत्वेसति प्रथमान्तपदोपस्थाप्यत्वस्यैव तत्प्रयोजकत्वात्। चैत्रः पचति तण्डुल इत्यत्रकर्म्मत्वे लाक्षणिकप्रथमान्तपदोपस्थाप्ये तण्डुले आख्यातार्थैकत्वान्वयवारणाय सत्यन्तम्। ननु चैत्र इव मैत्रोगच्छतीत्यत्र चैत्रेऽपि तदर्थसंख्यान्वयापत्तिः, कर्मत्वाद्यनवरुद्धत्वात् प्रथमान्तपदोपस्थितिविषयत्वाच्च, पक्वमन्नं भुज्यते इत्यत्रा न्नादौ तदन्वयानुपपत्तिश्च कर्मत्वावरुद्धत्वादितिचेन्न, सत्यन्तस्येतरविशेषणत्वतात्पर्याविषयत्वरूपार्थे तात्पर्य्येणाऽऽद्ये चैत्रस्येवार्थसादृश्यविशेषणत्वेन तात्पर्यविषयत्वेन, द्वितीयेऽन्नादेर्विशेष्यत्वेन चापत्त्यनुपपत्त्यभावात्।

एवञ्चेतरविशेषणत्वेन तात्पर्यविषयत्वविशिष्टप्रथमान्तपदोपस्थाप्यः कर्ता संख्याप्रधानयोग्य इतिसिद्धम्। तण्डुलम्पचतीतिवाक्ये तण्डुले, चैत्रेण-सुप्यते इत्यत्र स्यापेः, संख्यान्वयवारणायविशेष्यदलम्। अथवा धात्वर्था-तिरिक्ताविशेषणत्वे सति प्रथमान्तपदोपस्थाप्यंसंख्याभिधाने प्रयोजकम् तेन चैत्र इव मैत्रोगच्छतीत्यत्र धात्वर्थातिरिक्तसादृश्ये चैत्रविशेषणत्वेन न तत्र तदन्वयः स्तोकं पचतीत्यत्र स्तोकस्य धात्वर्थविशेषणत्वेऽपि न तत्र संख्यान्वयः, द्वितीयान्तपदोपस्थाप्यत्वात्तस्य। ननु शाब्दिकनये व्यापारा-श्रयरूपकर्त्तरि शक्त्युपगमे गौरवाद्विभेपिचेद्, व्यापारसामान्ये लकाराणां शक्तिरिति मीमांसकमतंकथं त्यज्यते इति चेन्न, व्यापारस्य जन्यत्वादिघटि-तत्वेन तत्रापि कृत्यपेक्षया गौरवात्। ननु आख्यातस्य यत्नार्थकत्त्व मप्यसंग-तन्तदभावेऽपि रथोगच्छतीति प्रयोगादिति चेन्न. तत्र कृत्यर्थबाधाद् गमा-नानुकूलव्यापारे लक्षणाभ्युपगमात्। ननु तत्र गमनाश्रयत्वस्यैव बोध स्तत्कथं तादृशव्यापारे लक्षणेति चेत्, तत्रैव लक्षणां स्वीकुरु। नन्वेवं चक्षुर्जाना-तीत्यादौ व्यापारे जनकत्वे वा लक्षणा स्वीकारा दाश्रयत्वे लक्षणानियमोन संभवतीति चेत्, यत्नार्थबाधे साम्भावनिकार्थे लक्षणा सर्वत्रेतिगृह्यताम्। यथा नश्यतीत्यत्र प्रतियोगित्वे सा। कृत्प्रत्ययस्य कर्तृकर्मादौ शक्तिः। नच गौरवम्, चैत्रः पक्ता तण्डुलः पक्व इत्यादौ, अभेदान्वयदर्शनेन तत्र गौ-रवस्यापीष्टत्वात्। उपमानाच्छक्तिग्रहो यथा ग्रामीणस्यारण्ये गवयप्रत्यक्षे गवयपिण्डे गोसादृश्यज्ञानं करणम्, गोसदृशोगवयपदवाच्य इति पूर्वो-पदिष्टवाक्यार्थस्मृति व्यापार स्ततो गवये गवयपदवाच्यत्वरूपशक्तिज्ञानं भवति तथाकोशादपि "विष्णुर्नारायणः कृष्णः" इत्यादिना शक्तिग्रहः। क्वचिद्गौरवे सति तत्त्यागोऽपि यथा नीलादिपदस्य गुणे गुणिनि च शक्तिः कोशा ल्लभ्यते तत्र गुणे एव शक्तिः स्वीक्रियते नीलत्वादे श्शक्यतावच्छेद-कत्वे लाघवात्, नीलगुणवति तत्स्वीकारे ऽननुगतनीलगुणस्य तत्त्वे गौरवम्। कथंतर्हि गुणिनोबोध इति चेल् लक्षणयेतिस्वीकार्य्यम्। आप्तवाक्याद्यथा कोकिलःपिकपदवाच्यः इत्युपदेशेन. पिके शक्तिग्रहः। व्यवहारा द्यथा, प्रयो-

जकवृद्धेन घटमानयेत्युक्ते प्रयोज्येन घटे आनीते तत्रत्यबालेन घटानयनकार्यम्, घटमानयेतिवाक्यजन्यमित्यवधारितम् । नन्वेवं वाक्ये एव शक्तिः सिद्धा तथा च तव सिद्धान्तभङ्गइति चेन्न, पश्चाद्घटंनय गामानयेति वाक्ये बालेन श्रुतेऽवापोद्वापाभ्यां पदेएव तद्ग्रहात् । अत्र प्रभाकरानुयायिनः आद्यशक्तिग्रहो लिङादिपदघटितवाक्ये एव तथाच कार्य्यत्वानिरूपितविषयकशाब्दत्वव्यापकीभूतकार्य्यताविषयकशाब्दत्वावच्छिन्नजनककार्य्यता वाचकलिङादिपदज्ञानं कारणमेवञ्चघटादिपदानां कार्यान्विते एव शक्तिरिति । नचैवं भूतले नीलोघट इत्यादिवाक्यात् कार्यताविषयकशाब्दबोधापत्ति स्तत्र कार्य्यताबोधने घटादिपदानां शक्त्यवधारणादितिवाच्यम् । कार्य्यताबोधं प्रति लिङादिपदानां स्वजन्यकार्योपस्थितिद्वारा हेतुत्वेन तदभावेन तद्बोधाभावस्येष्टत्वादित्याहु स्तन्न वरम् प्रथमतोऽन्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तत्त्यागे घटमात्रे शक्त्यवधारणात् । नन्वनुभवो लाघवविरोधीति चेन्न, चैत्र पुत्रस्तेजातः कन्या ते गर्भिणीजातेति वाक्यान्मुखमालिन्यविकाशादिदर्शनेन तयोरपितद्वाच्यत्वापत्तेः । तत्रलिङादेरभावेन त्वन्मते बोधाभावेन मुखमालिन्याद्यनापत्तेश्च । ननु तत्रापि तं पश्येत्याद्यध्याहारः, तत्र प्रमाणाभावात् । जातः पुत्रोमृत श्चेत्यत्राध्याहाराऽसंभवाच्च तस्मात्कार्याद्यनन्विते एव शक्तिः पदानामिति । भाट्टास्तु अन्विते शक्ति मभ्युपगच्छन्ति यथाघटादेःकर्म्मत्वाद्यन्विते इत्याहुः , तदपिनानन्यलभ्योहि शब्दार्थ, इति तत्सिद्धान्तेनान्वयिपदार्थस्य पदान्तरलभ्यत्वात्, घट मानयेत्यादौ घटातिरिक्तपदादेरुच्चारणवैयर्थ्यापत्तेश्चेति । वाक्यशेषाच्छक्तिग्रहो-यथा "यवमय श्चरु र्भवतीति" वाक्येदीर्घशूके आर्यप्रसिद्धिः, प्रियङ्गौ-म्लेच्छानां तत्र "यदान्या ओषधयो म्लायन्ते अथैते मोदमाना स्तिष्ठन्ति"—इति वाक्य शेषेण दीर्घशूके शक्तिनिर्णयः । ननु यवपदस्योभयत्राऽपि शक्तिः किन्नेति चेन्न, नानार्थे शक्तिकल्पने गौरवात् । नन्वेवं हर्य्यादिशब्दानामपि गौरवा न्नानार्थत्वन्न स्यादितिचेन्न, तत्र प्रमाणसिद्धविष्ण्वादिपदार्थसत्त्वेन विनिगमनाऽभावेन सर्वत्र तत्कल्पनात् । विवरणादपि शक्ति-

ग्रहः, घटोऽस्तीत्यस्य कुम्भोऽस्तीतिविवरणेन कुम्भेऽपि तद्ग्रहः। तत्समानार्थकपदान्तरेण तदर्थकथनम् विवरणं यथा यत्नार्थकरोतिना विवरणात् पचतीत्यत्राख्यातस्य कृतौ शक्तिग्रहः। प्रसिद्धपदसान्निध्यात्, शक्तिग्रहो यथा "इहसहकारतरौ पिको रौती" त्यत्र पिकपदस्य कोकिले तद्ग्रह इत्येवं व्याकरणादीनां शक्तिग्राहकत्वमित्यत्रविस्तरः॥

( ३ ) जात्यादिशक्तिवादं निराकृत्य स्वमतेन तांसाधय ?

अत्रेदमाकूतम् = घटादिपदानां धर्मे जात्यादिरूपे एव शक्ति र्लाघवाद्व्यक्तीना मानन्त्याद्व्यभिचाराच्च। ननु विशिष्टबोधदर्शना द्विशिष्टे एव सेति चेन्न, तत्र तत्स्वीकारे जातावपि तस्याआवश्यकत्वेन "विशेष्यं नाभिगच्छेत् क्षीणशक्ति विंशेषणे" इतिन्यायेन प्रथमोपस्थितधर्मेएव तस्या-अङ्गीकारात्। व्यक्तिबोध स्तथासति न स्यादिति चेन्न, लक्षणया तस्या अपितत्त्वसंभवादिति मीमाँसका स्तन्न। व्यक्तिबोधस्यानुभविकत्वेन तत्र शक्तिमन्तरा तद्बोधानापत्तेः। नच लक्षणया तस्या बोधः, अन्वयाद्यनुपपत्तिमन्तराऽपि तद्बोधानुभवात्। ननु व्यक्तौ तस्या स्वीकारे शक्त्यानन्त्यमिति चेन्न, सर्वत्र व्यक्तावेकस्या एवेश्वरेच्छाया श्शक्तेःस्वीकारात्। नन्वेव मननुगम स्तासा मानन्त्यात् शक्तिज्ञानकारणतावच्छेदकत्वं न सम्भवतीति चेन्न, गोत्वघटत्वादे रेवानुगमकस्य सत्त्वात्। तथा चोक्तम् "आनन्त्येऽपि हि भावाना मेकं कृत्वोपलक्षणम्। शब्द स्सुकरसम्बन्धो नच व्यभिचरिष्यतीति"। ननु शाब्दबोधे न पदजन्यपदार्थोपस्थिति र्हेतुः संसर्गांशे ताम्विनाऽपि तदनुभवात्, नचैवं घटात् पटादेरपि भानापत्तिरितिवाच्यम्, गोत्वप्रकारक गोविशेष्यकबोधे गो शक्तिज्ञानत्वेनहेतुत्वादिति चेन्न, गौः शक्येतिशक्तिग्रहे व्यक्तेः शक्यत्वम्, गोत्वं शक्यमिति तद्ग्रहे गोत्वे सेतिनियमनेन गोत्वे शक्तिग्रहे समानप्रकारकशक्तिग्रहस्यशाब्दोपस्थित्यो र्हेतुत्वेन गोत्वप्रकारकगोविशेष्यकपदार्थोपस्थितिशाब्दबोधयोरभावापत्तेः। ननुकार्य्यत्वाद्युपाधिप्रकारकशाब्दबोधस्यैतादृशसमानप्रका-

रकत्वस्य तदनुमतत्वेऽपि जातिप्रकारकबोधे तादृशसमानप्रकारत्वस्य तदनङ्गीकाराजातिशक्तिसत्त्वेऽपि तादृशबोधे बाधकाभाव इति चेन्न, गोत्वे शक्त्युपगमे गोत्वत्वस्य शक्यतावच्छेदकत्वे तस्यच गवेतरावृत्तित्वे सति सकलगोसमवेतत्वरूपत्वेन शक्यतावच्छेदके गोव्यक्तिप्रवेशे गौरवात्, तथाच वृश्चिकभिया पलायमानस्याशीविषमुखे प्रक्षेपपद्धतिन्यायापत्तेः । नन्वेवं कुत्र-तर्हि शक्तिरितिचेज् जात्याकृतिव्यक्तिषु तिसृषु शक्तिरित्यवेहि । तथाच पारमर्षसूत्रम् "जात्याकृतिव्यक्तयः पदार्थः"। ननु गोत्वादौ सर्वत्रैव शक्तिस्वीकारे गोत्वत्वस्य त्वया प्यवच्छेदकत्वे स्वीकृते गौरवन्तुल्यमिति चेन्न,तत्र शक्तिस्वीकारेऽपि तस्य स्वरूपतो भानोपगमेन दोषाऽभावात् । परस्पर परित्यागेन परस्परस्य बोधाभावात् त्रिष्वेकैवशक्तिरतएव पदार्थ इत्येकवचनान्त स्सौत्रनिर्देशस्संगच्छते इत्यन्यत्रविस्तर इति शिवम् ॥

## ( ४ ) शक्तपदभेदान् ब्रूत ?

अत्रायभिसन्धिः—निरूक्तेच्छारूपशक्तिमत्पदं शक्तमित्युच्यते तच्च यौगिकरूढयोगरूढभेदात्त्रिविधम् । यत्र प्रकृत्यर्थप्रत्ययार्थमात्रप्रतीति स्तदाद्यम्, यथावाचकपाठकादिपदं, यत्रावयवार्थ नैरपेक्ष्येण समुदायादर्थप्रत्ययस्तद्द्वितीयम्, यथागोमण्डपमणिनूपुराक्षौहिणीरथन्तरादि स्तत्र गमनादिधात्वर्थायननुभवः । यत्रावयवार्थप्रतीतिपुरःसरसमुदायशक्त्या बोध स्तदन्त्यम्, यथा पङ्कजादिपदम्, तत्र पङ्कजनिकर्तृरूपोऽवयवार्थशक्त्या बोधः पद्मत्वेन रूपेण समुदायशक्त्या । नचैवं केवलयौगिकशक्त्या कुमुदादेरपि बोधः स्यादेवेति चेन्न, रूढ्यर्थज्ञानस्य केवलयौगिकार्थप्रतिबन्धकत्वात् । नच वाच्यंरूढिज्ञानस्ययौगिकार्थप्रतिबन्धकत्वेपद्मेऽपि पङ्कजनिकर्तृत्वार्थ बोधानापत्तिरिति, पद्मत्वावच्छिन्नविशेष्यत्वानिरूपितपङ्कजपदयोगजन्यपङ्कजनिकर्तृत्वावच्छिन्नविषयताशालिबोधम्प्रति रूढिज्ञानस्य प्रतिबन्धकत्वेन पद्मधर्मिकयोगार्थबुद्धेः प्रतिबन्ध्यताऽवच्छेदकानाक्रान्तत्वात् । नन्वेवंविरोधिविषयकज्ञानस्य प्रतिबन्धकत्वं जनकज्ञानविघटकत्वेनैव

नान्यत्रेति नियमभङ्ग इति चेन्न, रूढयर्थस्य सन्निहितोपस्थितिकत्वात्, समुदायशक्त्युपस्थितपद्मेऽवयवशक्त्युपस्थितार्थस्य बोधे प्रतिबन्धकाभावात् । ननु पङ्कजपदेन कदाचित्कुमुदस्याऽपि बोधानुभवसिद्ध इति चेत्, रूढ्यर्थबाधे लक्षणया तत्र कुमुदत्वविशिष्टपङ्कजनिकर्तृत्वेन कुमुदादेर्बोधसंभवात्, नन्वेवं शक्त्या पङ्कजपदेन पद्मस्य लक्षणया कुमुदस्यावयवार्थविशिष्टबोधेऽपि यत्र कुमुदादेर्तात्पर्यं न पद्मत्वस्य तादृशावयवार्थविशिष्टस्य च बाध स्तत्र कागतिरिति चेत्, स्थलपद्मादौ अवयवार्थबाधेऽपि तत्र केवलरूढ्या शक्त्या पद्मत्वेन रूपेण बोधोऽस्त्वित्यवगच्छतु । यत्र यौगिकार्थरूढ्यर्थयो स्स्वातन्त्र्येण पृथग्बोध स्तद्यौगिकरूढमिति चतुर्थ मपि केचिन् मन्यन्ते । यथोद्भिज्जादिपद न्तत्र केवलयौगिकेऽर्थे गृह्यमाणे उद्भेदनकर्तृरूपोऽर्थ स्तद्गुल्मादिः, । रूढ्या तु यागविशेषस्यैवमश्वगन्धशब्दोऽपि-अश्वसम्बन्धिगन्धवत्तया वाजिशालायाबोधो ऽवयवशक्त्या, रूढशक्त्या त्वोषधिविशेषस्येति सर्वमनुरस्रम् इति शिवम् ।

## (५) लक्षणास्वरूपं तद्भेदान् तत्र बीजञ्च निरूपयतु ?

अत्रेदं रहस्यम्—शाब्दबोधे शक्तिज्ञानं सहकारीत्युक्तम्, तदयुक्तम्, गङ्गायां घोष इत्यादौ लक्षणाज्ञानेनाऽपिबोधादिति चेन्न, तत्र शक्तेर्वृत्त्युपलक्षणत्वेनादोषात् । वृत्तिश्च पदपदार्थयो स्सम्बन्ध श्शक्तिलक्षणान्यतररूपः । तत्रेदानीं लक्षणाया निरूपणावसर स्सा च शक्यसम्बन्धरूपा, सापि जहत्स्वार्थाऽजहत्स्वार्थाभेदेन द्विविधा । तत्राद्या यथा गङ्गायां घोष इत्यत्र प्रवाह रूपे शक्यार्थे घोषस्यान्वयानुपपत्त्या तात्पर्यानुपपत्त्या वाऽन्वयबाध स्तत्र लक्षणया तीरस्य बोधः । ननु किमिति तीरे एवसा न पदार्थान्तरे तत्राऽपि कस्यचित् सम्बन्धस्य सत्त्वादिति चेन्न, शब्दार्थसम्बन्धरूपाया स्तस्याः प्रवाहात्मकशक्यार्थसम्बन्धस्य संयोगरूपस्य तीरे गृहीतत्वेन तीरोपस्थितेरेवबोधात् । नन्वन्वयानुपपत्त्या तत्स्वीकारे घोषस्यैव मीनादौ लक्षणाया मन्वयबोधसंभवे तत्र तीरे एव लक्षणा गङ्गापदस्येति कथंनियमः किञ्च यष्टीः प्रवेशयेत्यत्र भोजन-

तात्पर्ये यष्टिधरे लक्षणानापत्ति स्तत्र यष्टीनामपिगृहप्रवेशनसम्भवादितिचे त्ता-त्पर्यानुपपत्तेरेव वस्तुत स्तद्बीजत्वन्नेन पूर्वोक्तदोषानवकाशः, अतएव गङ्गायां घोष इत्यत्र तात्पर्येण कचित्तीरस्य गङ्गापदेन, क्वचिच्च घोषपदेन, मीनादेर्लक्ष-णया बोध इत्युपपद्यते । एवञ्चगङ्गायांघोषः यष्टीःप्रवेशय इत्यादौ स्वार्थ-प्रवाहयष्ट्यादित्यागेन तीरयष्टिधरादौ लक्षणा इति भवति जहत्स्वार्थोदाह-रणम् । काकेभ्योदधिरक्षताम्, छत्रिणोयान्ती त्यादावजहत्स्वार्था दध्युपघा-तकैकसार्थवाहित्वयो लक्षणायां दध्युपघातकत्वेन काकस्यैकसार्थवाहित्वेन च्छत्रिणोऽपि बोधात् । नन्वेवं गङ्गायां घोष इत्यत्र गङ्गापदेन गङ्गातीरत्वेन बोधे जहत्स्वार्थत्वानुपपत्तिरिति चेन्न, तीरत्वेनबोधे एव जहत्स्वार्थत्वस्य सर्वसम्मतत्वेन गङ्गातीरत्वेन बोधे द्वितीयस्या एव तत्रेष्टत्वात् । ननु शक्यार्थ सम्बन्धस्य संयोगस्य ग्रहणे तीरत्वप्रकारकबोधोनस्यात्,तत्र तत्सम्बन्धा भावात् संयुक्तसमवायसम्बन्धग्रहणे तीरत्वबोधेऽपि तीरस्य बोधोनस्यादिति चेन्न, तीरत्वगङ्गातीरत्वप्रकारकादिबोधे तेन तेन रूपेण शक्यार्थसम्बन्धग्रहस्य कार-णत्वेन तीरत्वादौ लक्षणानभ्युपगमेऽपि तत्तत्प्रकारकबोधसम्भवात् । अतएव लक्ष्यतावच्छेदके न लक्षणेति केचिदाहुस्तन्न, घटत्वप्रकारकबोधे घटत्वेन शक्तिग्रहस्य हेतुत्वेन निर्वाहे शक्यतावच्छेदकेऽपि शक्त्यानापत्तेः, नच तव तथा सिद्धान्त इति । ननु सर्वत्र लक्षणोदाहरणे साक्षाच्छक्यार्थसम्बन्ध-स्यदृष्टत्वाद् द्विरेफपदे स्ववाच्यरेफद्वयघटितभ्रमरपदवाच्यत्वरूपपरम्परास-म्बन्धेन तद्बोधे कथं सेति चेन्न, तत्र लक्षितलक्षणाया स्तृतीयस्यास्वी-कारात् । ननु तच्छाब्दबोधे तच्छक्तपदज्ञानत्वेन हेतुत्वाल्लाक्षणिकस्य शाब्द-बोधः कथमिति चेन्न, लाक्षणिकस्य शाब्दबोधे पदान्तरसमभिव्याहारस्य कारणत्व न्तथाच शक्तिलक्षणाऽन्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थ शाब्दबोधम्प्रति पदानां सामर्थ्यावधारणेन पदैकस्य लाक्षणिकत्वेऽपि शक्तपद-मादाय शाब्दोपपत्तिसम्भवात् । अथशक्यसम्बन्धो नलक्षणा तथासति वाक्य-स्य शक्याऽप्रसिद्ध्या तत्र लक्षणा न स्यादिति चेन्न—इष्टापत्तेः । ननु गभीरायां नद्यां घोष इत्यत्र नदीपदस्य नदीतीरे लक्षणाङ्गीकारे गभीरपदार्थस्य पदार्थैक-

देशे नद्या मनन्वयापत्तेः, गभीरपदस्य नदीतीरे लक्षणाङ्गीकारे नदीपदस्य वैयर्थ्यापत्तेश्च तथा च गभीरायां नद्यां घोष इत्यत्राद्यपदद्वयात्मकवाक्य लक्षणा तव गले लग्ना तथाच "भक्षितेऽपि लशुने नच शान्तो व्याधि" रिति चेन्न, तत्राऽपि नदीपदस्यैव नदीतीरे लक्षणया तत्र नदीपदार्थे गम्भीर-पदार्थान्वयेनेष्टसिद्धौ तत्रापि पदे एव लक्षणाङ्गीकारात् । नन्वेवं पदार्थैक देशे ऽन्वयापत्तिरिति चेन्न, देवदत्तस्य गुरुकुल मित्यादौ नित्यसापेक्षस्थले पदार्थैकदेशे ऽप्यन्वयस्वीकारात्, नदीपदस्य गभीरनदीतीरलक्षणायां गभीरपद-स्य तात्पर्यग्राहकत्वेनादोषाच्च, एवञ्चवाक्येनैवलक्षणेतिसिद्धम् । एवं बहु-व्रीहौ न शक्ति र्नापि वाक्यस्य लक्षणा तत्रापि एकदेशान्वयाङ्गीकारे चित्रगुरि-त्यादौ गोपदस्य गोस्वामिनि लक्षणायां चित्रपदार्थस्य पदार्थैकदेशे गवादाव-न्वये नेष्टसिद्धिः पदार्थैकदेशेऽन्वयानङ्गीकारे एकस्य चित्राभिन्नगोस्वामिनि लक्षणाया मपरस्य लक्ष्यार्थतात्पर्यग्राहकत्वेनोपपत्तिश्च, एवमारूढवानर इत्यत्र वानरारोहणकर्मणि वानरपदे लक्षणायां तादृशेष्टसिद्धिः । तत्पुरुषे पूर्वपद-स्य लक्षणा, तथाहि राजपुरुष इत्यादौ न राजन्पदार्थस्य भेदसम्बन्धेन साक्षा-त्पुरुषेऽन्वयः, निपातेतरनामार्थयो र्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात् । ननु प्रमाणाभावान्ना ऽङ्गीक्रियते साव्युत्पत्तिरिति चेन्न, राजापुरुष इत्यादावपि तथान्वयापत्त्या तत्कल्पनात्, घटोनपट इत्यादौ नञर्थभेदे घटपटयोरनुयोगि-त्वप्रतियोगित्वाभ्यां साक्षादेवान्वयात् निपातेतरेति, नीलोघट इत्यादौ नीलघटयो रभेदान्वयदर्शनाद्भेदेति, तथा च राजपदस्य सम्बन्धिनिलक्षणायां पुरुषेण सहाभेदान्वयः । ननु राजपदोत्तर लुप्तषष्ठीस्मृत्या भेदान्वयबोधस्सु-लभ इति चेन्न, तत्स्मृतिमन्तरापि तद्बोधस्यानुभाविकत्वात्, तस्मात्तत्र-पूर्वपदे लक्षणा सिद्धा । वस्तुतस्तु राजपुरुष इत्यादौ न लक्षणा व्युत्पत्ति वैचि-त्र्येण स्वत्वसंसर्गेणा न्वयबोधः अतएव दृश्यते राजमातङ्गा स्तस्यैवामी तुरङ्गमा इत्यत्र तच्छब्देन राज्ञः परामर्शो ऽन्यथा सर्वनाम्नां प्रधानपरामर्शित्वस्य स्वभावसिद्धत्वाद्द राज्ञः परामर्शानापत्तिरितितत्त्वम् । धवखदिरादिद्वन्द्वे लक्षणा न, तत्र धवखदिरयो र्विभक्त्यर्थद्वित्वेऽन्वयात् । नन्वेवं धवखदिरा-

दित्यत्रधवत्वस्य खदिरत्वस्य न प्रत्येक मुद्देश्यतावच्छेदकत्वम्, तथासत्या-
काशा वित्यादिवाक्यस्य प्रामाण्यापत्ति रतः सुपामुद्देश्यतावच्छेदकव्याप्य-
संख्याबोधकत्वनियम आश्रयणीय स्तथाच धवद्वयस्य खदिरद्वयस्य च बोधा-
पत्ति स्तथाच खदिरपदस्य धवखदिरसाहित्याश्रये लक्षणा स्वीकार्य्या, तथा
सत्युदेश्यतावच्छेदकीभूतसाहित्यव्याप्यत्व न्नधवद्वयादिवृत्तिद्वित्वस्येति नध-
वद्वयादेर्बोध इति तन्न साहित्ये लक्षणांगीक्रियते इति चेन्न, सहवृत्तित्वैक-
क्रियान्वयित्वयो र्वा साहित्यस्य तत्रासम्भवात् । तथाहि धवखदिरावित्यादौ
तत्वाभावेऽपिद्वन्द्वात् । नच द्वितीयेन निर्वाहः, क्रियाभेदेऽपि धवखदिरौ-
छिन्धि पश्येत्यादौ द्वन्द्वदर्शनात् , साहित्याननुभवाच्च । अतएव राजपु
रोहितौ सायुज्यकामौ यजेता मित्यत्र लक्षणाऽभावाद्द्वन्द्वसमास आश्रितः ।
ननु द्वन्द्वे साहित्यानुपगमे कर्मधारयादभेदापत्तिरिति चेन्न, वास्तवभेदे द्वन्द्व-
स्य तयोरभेदे कर्मधारयस्य च विवक्षणात् । ननु नीलघटयोरभेद इत्यत्राभेदे
कथं द्वन्द्व इति चेन्न, नीलघटयो र्नीलत्वघटत्वपरत्वेना ऽभेदः इत्यस्याश्रया
भेद इत्यर्थेनाऽदोषात् । नन्वेवं नीलघट इत्यादौ कर्मधारयानापत्ति स्तत्र धर्म
योर्भेदादितिचेन्न , समस्यमानपदार्थयोर्यत्राभेद स्तत्रतत्स्वीकारात , एवञ्च
पदार्थपदार्थतावच्छेदकयोर्भेदे उभयत्राऽपिद्वन्द्व इति सिद्धान्तः । नन्वेवं घटा
इत्यादौ पदर्थतावच्छेदकभेदाभावे द्वन्द्वाप्रसक्तौ तदपवादस्यैकशेषस्य प्रवृत्य-
भाव इति चेन्न । इष्टत्वात् । नन्वेवं तदभावे द्वित्वादिविशिष्टघटादिबोधोन
स्यादिति चेन्न, घटपदोपस्थापितार्थे द्वित्वाद्यन्वयेनोपपत्तेः । सकृदुच्चरि-
तन्यायविरोध स्तु न, तस्याप्रामाणिकत्वात् । नचैवमेकशेषोव्यर्थः , हर्य्यादौ
तस्य चारितार्थ्यात् । नन्वेवं समाहारद्वन्द्वे समाहारस्यानुभवात् तत्र पद-
द्वये लक्षणा तवाप्यागतेति चेन्न, अहिनकुलमित्यादौ नकुलपदस्य तत्र लक्षण-
याऽहिनकुलसमाहारस्य बोधे तत्र पूर्वपदस्य तात्पर्यग्राहकत्वेनोपपत्तौ तत्रा-
पिवाक्ये लक्षणानङ्गीकारात् । नन्वेवं भेरीमृदंगवादयेत्यत्र समाहारस्य विशे-
ष्यत्वेन तत्कर्मकवादनाऽसम्भव स्तथाहि, अभिघातरूपसंयोगावच्छिन्नक्रिया
या वादनपदार्थत्वेन संयोगस्य च समाहारेऽन्वया ऽसंभवादिति चेन्न, स्वाश्र-

यवृत्तित्वरूपपरम्परासम्बन्धेन वादनकर्मत्वान्वयसम्भवात्, स्वं समाहारस्त-दाश्रयं भेरीमृदंग तत्रोक्तवादनपदार्थं इति समन्वयः । वस्तुतस्त्वहिनकुल-मित्यादौ प्रत्येक मेकत्वान्वयो नतु समाहार स्तत्रानुभूयते । ननु पाणिपादमि-त्यादे स्समुदायस्य समाहाराऽबोधकत्वे समाहारसंज्ञा तस्य नस्यादिति चेन्न, द्वन्द्वश्चेत्यादिसूत्रेणैकत्वनपुंसकत्वयो र्यत्र तत्र तेन तादृशसंज्ञाबोधानात्, ततोऽन्यत्रैकवचनस्यासाधुत्वात् । पितरौ श्वसुरावित्यदौ पित्रादिपदस्य स्त्रीजनकदम्पत्यादौ लक्षणा । कर्मधारयेतु न लक्षणा नीलोत्पलादौ तत्र-नीलादे रभेदेनोत्पलपदार्थादा वन्वयेनोपपत्तेः, अतएव "निषादस्थपतिं याजयेदि"त्यत्र न षष्ठीतत्पुरुषो नापि बहुव्रीहिर्लक्षणायां गौरवात्, अपितु-कर्मधारयएव लाघवात्, इति सिद्धान्तितं निषादाधिकरणे । नचैवं निषादस्य सङ्करजातिविशेषस्य तत्राधिकारेऽपूर्वविद्याकल्पने श्रुतेश्शूद्रानधिकारित्वेन तत्कल्पन मयुक्तमिति चेन्न, लाघवान्मुख्यार्थान्वये पश्चात्तत्रानधिकारबोधक श्रुतौ संकोचेऽपि फलमुखगौरवस्या दोषावहत्वेनादोषात् । अव्ययीभावे उप-कुम्भादिपदस्य कुम्भसमीपलक्षणायां पूर्वपदस्य तात्पर्यग्राहकत्वम् । उपशब्दे एव लक्षणाकिन्नेति चेन्न, प्रत्ययानां सन्निहितपदार्थगत स्वार्थबोधकत्व-व्युत्पत्तेः । अर्द्धपिप्पलीत्यादा वप्युत्तरपदार्थ एव लक्षणोक्तव्युत्पत्तेः । एवञ्च समासे न क्वापिशक्ति र्नाऽपि समुदायस्य लक्षणेति सिद्ध मिति शिवम् ।

## ( ६ ) शाब्दबोधे कारणानि सोदाहरणानि व्याख्येयानि ?

अत्रेदंहृदयम्—शाब्दबोधे चत्वारि कारणानि आसत्तियोग्यताज्ञानाका-ङ्क्षाज्ञानतात्पर्यज्ञानानि, तदुक्तम् "आसत्ति र्योग्यता काङ्क्षा तात्प-र्यज्ञान मिष्यते कारण"मितियत्पदार्थस्य यत्पदार्थेनान्वयोपेक्षितस्तयो-रव्यवधानेनोपस्थिति रासत्तिः । साचशाब्दबुद्धौ हेतुः, तेनगिरिर्भुक्त मग्निमा-न्देवदत्तेनेत्यत्र न शाब्दबोध आसत्तेर भावात् । ननु नीलो घटोद्रव्यं पट इत्यत्र-नीलपदार्थपटपदार्थयो र्यत्रान्वयोवक्तुस्तात्पर्यविषयो ननु नीलपदार्थघटपदार्थ यो स्तत्र नीलपदघटपदयोरासत्ति र्न स्यात् तत्तदर्थान्वयस्य त्तात्पर्यविषया

भावादिति चेन्न, तत्र तयोरासत्ते रभावस्येष्टत्वात् । ननुतर्हि नीलोघटइति कथं शाब्दबोधइतिचे दासत्तेरभावेऽपि तद्भ्रमाच्छाब्दबोधः । नच तत्र यथाऽऽसत्तिभ्रम स्तदा शाब्दबोधोऽपिभ्रमात्मक एव स्यात् । ननु भ्रमात्मकशाब्दबोधस्तत्रेष्ट एवेति चेन्न, घटे नीलस्य सत्वेन विषयबाधाभावात् । ननु शाब्दस्याऽस्तु तत्र प्रमात्वमिति चेन्न, आसत्तिभ्रमाच्छाब्दभ्रम इति सिद्धान्तभङ्गापतेरिति वाच्यम्, आसत्तिभ्रमसत्वेऽपि प्रमात्मकशाब्दबोधे क्षतिविरहात् । नन्वेवं शाब्दसामग्र्या भ्रमत्वेऽपि शाब्दबोधः प्रमात्मकः सर्वत्र स्यादिति चेन्न, योग्यताभ्रमेण शाब्दभ्रमस्येष्टत्वस्वीकारात् । आसत्तिभ्रमाच्छाब्द भ्रमइति सिद्धान्तस्य कागतिरितिचेत्, तस्यनिर्युक्तिकत्वात् । ननुश्लोके निरुक्ताऽऽसत्तेरभावेन शाब्दबोधो नस्यात् । न चासत्तेर्भ्रमः; विशेषदर्शनेन तत्र भ्रमस्यापि कल्पनाऽसम्भवादिति चेन्न, श्लोकादौ योजनावाक्यादेवान्वयबोधोपगमात् । नन्वव्यवधानेनपदोपस्थिति रासत्तिः शाब्दे हेतुरित्ययुक्तम् अनेकपदघटितवाक्ये तदसम्भवात, तथाहि, छत्री कुण्डली वासस्वी देवदत्त इति वाक्ये उत्तरस्मृत्या पूर्वस्मृतिनाशेन व्यवधानेन तत्पदस्मरणाऽसम्भवस्तथाच तत्राऽऽसत्तेरभाव इति चेन्न, प्रत्येकपदानुभवजन्यसंस्कारै श्चरमस्य तावत्पदविषयकस्मरणस्या व्यवधानेनोत्पत्तिसंभवात् । ननु तद्विशेष्यकतत्प्रकारकस्मृतिम्प्रतितद्रूपसंस्कारः कारणं तथाच प्रत्येकपदसंस्कारै र्नानापदविशेष्यकस्मरणाऽसम्भव.स्मृतीनां विभिन्नविषयकत्वादिति चेन्न, घटचक्षुःसंयोगस्य पटप्रत्यक्षांशे कारणत्वेऽपि घटचक्षुःसंयोगपटचक्षुःसंयोगाभ्यामेकप्रत्यक्षवत्, तत्पदगोचरसंस्कारस्य भिन्नपदविषयकस्मृत्यंशे जनकत्वेऽपितत्तत्संस्कारजन्यस्मरणस्यैकस्य समूहालम्बनस्य जनने बाधकाऽभावात् । ननूद्बोधकाभावात् स्मृतेरभाव इति चेन्न, पूर्वपूर्ववर्ण जनितसंस्कारसचिवेन चरमवर्णप्रत्यक्षस्यैद्बोधकत्वात् । ननु चरमवर्णानुभवस्योद्बोधकत्वे मानाभावइति चेन्न, पदस्मरणवदाशुतरविनाशिनां क्रमिकाणां पदजन्यपदार्थोपस्थितीनां मेलनाऽसम्भवे सर्वत्र शाब्दबोधे पदार्थोपस्थिते स्समूहालम्बनाया एव तद्धेतुत्वा दितिनव्याः । ननुघटमान-

चेत्यादौ पूर्वंघटीया कर्मतेत्यन्वयबोध स्ततोघटकर्मक मानयनमिति चेन्न, वृद्धयुवशिशुभिः कपोतैर्युगपत्क्रियमाणखलसञ्चरणमिवाचिरचिरतरसन्निहितकालोक्तानां पदार्थानां स्मरणादेकदैवाखण्डवाक्यार्थं बोध मन्तरापि ताव-त्पदार्थानां महावाक्यार्थबोधाङ्गीकारात्। तदुक्तम्। "वृद्धा युवानः शिशवः कपोताः खले यथामीयुगपत् पतन्ति। तथैव सर्वे युगप-त्पदार्थाः परस्परेणान्वयिनो भवन्ति" इति प्राचीनाः। वस्तुतस्तु, "यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते। तेन तेनान्वित स्स्वा-र्थः पदै रेवावगम्यते" स्वार्था काङ्क्षितं स्वार्थयोग्यम् यद्यद सन्निधानं स्वार्थोपस्थिति विषयोभवति, तेन तेनान्वितः स्वार्थः पदैः प्रथम मनु-भाव्यते इति तदर्थः। एवञ्च खण्डवाक्यार्थबोधोत्तरं महावाक्यार्थबोधस्त-था च समूहालम्बनात्मकपदार्थस्मरणस्य न प्रयोजनम्। ननु घटमानयेत्यादौ चरमपदार्थस्मृतिकाले घटादिपदस्मृते र्नाशात् समूहालम्बनस्मृति रावश्यकी-तिचेन्न, तन्नाशेऽपि घटीया कर्मतेत्या द्यवान्तरबोधस्यैव पदजन्यपदार्थो-पस्थितित्वेन महावाक्यार्थबोधसम्भवादितितत्वम्। ननु पदघटकवर्णाना-मेकदोत्पत्तेः रभिव्यक्तेश्चाभावात् तद्घटितपदादेरप्यनभिव्यक्तौ पदप्रत्यक्षानु-पपत्तौ पदज्ञानस्य शाब्दप्रमायाः करणत्वाऽसम्भव इत्यत स्तावद्वर्णाभिव्य-ङ्ग्यस्स्फोटोऽङ्गीकार्य्य इति शाब्दिकमत ङ्किमिति तार्किकै र्नाभ्युपेयते इति चेन्न, उक्तरीत्योपपत्ते स्तदनङ्गीकारात्। यत्तु मीमांसका वाक्यार्थस्य लक्षणया सर्वत्र बोधेन वाक्यैकदेशप्रयोगेऽपिवाक्यार्थस्मृत्या शाब्दबोधोऽयमेवार्थाध्या-हार इत्याहु, स्तन्न उक्तरीत्या वाक्यशक्तिनिरासेन तत्सम्बन्ध्यर्थे लक्षणाया अप्यसम्भवात्, विना पदोच्चारण न्तदर्थानुपस्थितौ शाब्दबोधानापत्ति रतो द्वारमित्युक्तौ पिधेहीतिपदाध्याहारेणैवबोधः। ननुद्वारकर्मकपिधानानुकूल-कृतिबोधे द्वाराद्यानुपूर्वीज्ञान ङ्कारण मतोद्वारमित्येतावन्मात्रेण न शाब्दबोधः, नच तादृशानुपूर्व्याः परस्परव्यभिचार श्शङ्क्यः, अव्यवहितोत्तरत्वस्य कार्यत्तावच्छेदककोटौ सन्निवेशादिति चेन्न, क्रियाकर्म्मपदानां तेन तेन रूपे-णाकाङ्क्षितत्वेनान्यतरापाये बोधानाभरोः। अतएव पुष्पेभ्यइत्यत्र स्पृह-

यतीत्यध्याहारेणैव बोध स्तस्य साधुत्वञ्च तस्माच्छब्दाध्याहार इतिसिद्धम्। इत्यालप्तिः॥

(७) अकथेयं योग्यता या शाब्दबोधे हेतु रित्यवान्तरप्रश्नः ?

तत्र योग्यताज्ञानस्य हेतुत्व मभिहितम्। साच "पदार्थे तत्र तद्वत्ता-योग्यता परिकीर्त्तिता" इति लक्षणलक्षिता। नन्विद मसङ्गतं स्वस्मिन् स्वाधिकरणत्वायोगादिति चेन्न, एकपदार्थेऽपरपदार्थसम्बन्धवत्त्वं सेति-स्वीकारेणादोषात्। ननु तज्ज्ञानस्य शाब्दबोधहेतुत्वे मानाऽभाव इति चेन्न, तस्याकारणत्वे वह्निना सिञ्चती त्यादा वपिबोधापत्तेः। ननु योग्यता ज्ञानं शाब्दबोधम्प्रति न कारणमभेदसम्बन्धेन नीलरूपवत्त्वङ्घटे इत्येवं रूपवत्वात्, तस्य च शाब्दबोधरूपस्यानुभवरूपत्वेनापूर्वत्वात् ततः पूर्वमनिश्चितत्वादिति चेन्न, शाब्दबोधम् प्रति संशयनिश्चयसाधारणयोग्यताज्ञानत्वेन हेतुत्वाङ्गीकारेण क्वचित्संशय रूपस्य क्वचिद्भूतले घट इति प्रात्यक्षिकनिश्चयोत्तर भाविनि शाब्दबोधे निश्चयात्मकस्य च तस्य सत्त्वेन तम्प्रति तत्कारणत्वसिद्धेरितिप्राञ्चः। नव्यास्तु, योग्यताज्ञानं न शाब्दबोधे हेतुः। नचैवं वह्निना सिञ्चतीत्यादौ शाब्दबोधापत्तिरितिवाच्यम्, सेकक्रियायाम् बह्ने स्तत्कारणत्वबाधनिश्चय रूपप्रतिबन्धकसद्भावेन तादृशवाक्याद्बोधाभावात्। नन्वयोग्यतानिश्चयस्य प्रतिबन्धकत्वे तदभावत्वेन हेतुत्वं वाच्यम् तदपेक्षया लाघवेन योग्यता-ज्ञानहेतुत्वस्यैवोचितत्वमिति चेन्न, तद्धर्मिकतद्वत्ताबुद्धिंप्रति तद्धर्मिकतद-भावप्रकारकनिश्चयस्य ज्ञानमात्रम्प्रति प्रतिबन्धकत्वस्य क्लृप्ततया शाब्दबोध म्प्रत्यपि प्रतिबन्धकत्वेनापूर्वकल्पनाऽभावात्। ननु पूर्वं घटाभावस्य भूतले निश्चितस्य तत्रैव भूतले घटचक्षुस्संयोगे घटवद्भूतलमिति ज्ञान म्भवति, तच्चन-स्यात् तदभावनिश्चयसत्त्वादिति चेन्न, लौकिकसन्निकर्षाजन्यदोषविशेषाज-न्यतद्धर्मिकतद्वत्ताबुद्धि म्प्रत्यनाहार्य्याप्रामाण्यज्ञानानास्कन्दिततद्धर्मिक तद-भावनिश्चयः प्रतिबन्धक इति कल्पनेनादोषात्। शङ्खोनपीत इति बाधज्ञा-नसत्वेऽपि पित्तादिदोषात् पीतः शङ्ख इति प्रत्यक्षोदयात् प्रतिबन्ध्यकोटौ

दोषविशेषाजन्येति, शुक्तौ नेदंरजतमिति ज्ञानोत्तरन्दोषजन्यस्येदं रजतमितिभ्रमस्य वारणाय विशेषेति, सिंहोमाणवक इत्यत्र नायंमाणवकस्सिंह इति ज्ञानसत्वेऽपि एवंज्ञानसत्वात् प्रतिबन्धककोटावनाहार्य्येति, पूर्वंशुक्काविदंरजतमितिभ्रमानन्तरंपश्चान्नेदंरजतमिति ज्ञानदर्शनात्, तत्रैवाप्रामाण्येत्यादि। ननु न योग्यताज्ञानं यत्रतत्रशाब्दबोधनापत्तिरिति चेन्न, योग्यता ज्ञानविलम्बे शाब्दबोधविलम्बे मानाभावमादित्याहुः। इतियोग्यता।

## (८) शाब्दबोधकारणमाकाङ्क्षाज्ञान न्निरूपय ?

अत्रेदन्तात्पर्य्यम् = तत्पदविशिष्टत्वमाकाङ्क्षात्वम्, अव्यवहितपूर्ववर्तित्वाव्यवहितोत्तरवर्त्तित्वान्यतरसम्बन्धेन वैशिष्ट्यम्, तज्ज्ञानं शाब्दबोधे कारणम्। यदाहुः "यत्पदेन विना यस्याऽननुभावकता भवेत्। आकाङ्क्षा" इति, यथा द्वारमित्युक्ते पिधेहीत्युक्ति मन्तरा द्वारमित्यस्य नान्वयानुभावकत्वम्, एवं पिधेहीत्यपि द्वारमितिपदम्बिना, तथाच क्रिया कारकपदयोः परस्परान्वयाऽनुभावकत्वादाकाङ्क्षा। ननु क्रियाकारक पदयो राकाङ्क्षाज्ञानं न शाब्दबोधे कारणन्तयोरव्यवहितत्वस्या ऽऽसत्यगतार्थत्वादिति चेन्न, तत्र तस्या ऽहेतुत्वेऽपि घटवृत्तिकर्मत्वमिति बोधम्प्रति-घटपदाऽव्यवतितोत्तराऽमूसमभिव्याहारज्ञानंकारणमित्येवं कार्य्यकारणभावानुरोधेन तत्र तज्ज्ञानस्य कारणत्वात्। अत एव घटः कर्मत्वमित्यादि वाक्यतो न तथाबोधः। नन्वय मेति पुत्रो राज्ञः पुरुषो ऽपसार्य्यतामित्यादावजनितान्वयबोधदशायां राजपदस्य पुत्रपदेनेव पुरुषपदेनाऽऽप्याकाङ्क्षा सत्वाद्राज्ञः पुरुष इतिबोधापत्तिरिति चेन्न, तत्र राजपुरुषयो राकाङ्क्षासत्वेऽपि तात्पर्य्याऽभावेन शाब्दबोधाभावात्। नन्वेवं पुरुषेण सह राज्ञोऽन्वये तात्पर्य्यसत्वे तथा बोधापत्ति राकाङ्क्षाया स्तत्रसत्वादिति चेन्न, इष्टापत्तेः। वस्तुतस्तु, आकाङ्क्षाशरीरे तत्पदं तत्पदज्ञानपरम्, अतएव मौनिश्लोकादेः शाब्दबोध स्तथाऽध्याहृतपदेऽपि तन्निर्वाहः। अध्याहारो नामाश्रुतपदानामनुसन्धानम्, स्वस्थानस्थितस्य पुनरनुसन्धान मावृत्तिः, तदीय स्थानान्तरस्थितस्या ऽनुसन्धान मनुवृत्तिः। अतएवमाकाङ्क्षात्रिधा। सिंहाव-

लोकनमण्डूकप्लुतिगङ्गास्रोतोवदितिभेदा दुदाहरणानि तत्र तत्र ज्ञेयानि इत्याकाङ्क्षा।

## (६) तात्पर्य्यस्वरूपं निरूपये त्यवान्तरप्रश्नः ?

ननुशाब्द बोधे तात्पर्यज्ञानङ्कारण मित्युक्त न्तत्किमितिचेद् वक्तुरिच्छा तात्पर्य्यमित्यवेहि। तथाहि घटमानयेत्यादौ कर्म्मत्वविशेष्यकाधेयतासंसर्गकघटप्रकारकप्रतीतीच्छा वक्तुस्तात्पर्य्यं तादृशेच्छयोच्चरितं वाक्य मिदमित्याकारकं श्रोतुस्तात्पर्य्यज्ञानं शाब्दबोधे कारणमिति। ननुतात्पर्यं ज्ञानं तत्र हेतुरित्यत्र किम्मानमितिचेत् "सैन्धवमानय" "श्वेतो धावती" त्यादौ क्वचिल्लवणस्य क्वचिदश्वस्य क्वचित्तदुभयो रावे,ऽन्वये श्वेतगुणविशिष्टस्य कस्य चित् कदाचित्,कदाचित्कुक्कुरादे र्बोधस्य तात्पर्य्यज्ञाननियम्यत्वादेव तत्कल्पनम्। नन्वत्रैतस्यैव तात्पर्य्यं मिति तात्पर्य्यस्यापि नियामकं प्रकरणादि कल्पयितव्यम्, तथाच "तद्धेतोरेव तत्वे किन्तेनेति" न्यायेनतेषामेव तत्र कारणत्व मस्तु किन्तात्पर्य्येणेति चेन्न, प्रकरणादीनां तत्र कारणत्वे परस्परजन्यबोधे व्यभिचारे ऽव्यवहितोत्तरत्वस्य कार्य्यतावच्छेदककुक्षौ निवेशे गौरवेण तेषां कारणत्वाऽसम्भवात्। ननु न तेषांपृथक्कारणत्वं किन्तु तात्पर्य्यज्ञानजनकत्वेनैकरूपेणैव कारणत्वेऽनुगमसम्भव इति चेन्न, तात्पर्य्यज्ञानत्वे कारणतावच्छेदकत्वापेक्षया तात्पर्य्यज्ञानजनकत्वे तत्कल्पने गौरवात्,ननु शाब्दबोधत्वावच्छिन्नम्प्रति तात्पर्य्यज्ञानस्य कारणत्वं न सम्भवति, वेदवाक्ये कर्त्तु रभावेन ततोबोधानापत्तिरिति चेन्न, तत्राऽपितात्पर्यज्ञानार्थं मीश्वरकल्पनेन तत्रापि तदीयतात्पर्यज्ञानसत्वेनादोषात्। ननु किमितीश्वरकल्पनया तत्राऽध्यापकतात्पर्यज्ञानेनैव निर्वाहादिति चेन्न, सर्गादा वध्यापकाऽभावेन तदानीं वैदिकवाक्याद्बोधाभाव प्रसङ्गात्। नचवाच्यम् कार्य्यद्रव्यानधिकरणकालविशेषात्मकखण्डप्रलयस्याऽभाव एव कुतः सर्गादिसम्भव इति, "नाहो न रात्रिर्न नभ" इत्यादि श्रुतेरेव तत्सत्वे मानत्वात्। ननु शुकस्य पदार्थज्ञानाभावा त्तत् पठितवाक्येन वैदिकादिना

बोधो न स्यादिति चेन्न, तत्रापीश्वरमन्वादे स्तात्पर्य्यसत्त्वात् । नचेश्वरेच्छयाविसम्वादित्वाभावाद्द विसम्वादिशुकवाक्यात् कथं बोध इति चेन्न, तत्राऽपि तच्छिक्षयितुस्तात्पर्य्याङ्गीकारात्, गृहीतनानार्थवृत्तिकादौ शाब्द बोधे तात्पर्य्यज्ञानस्य कारणत्वेऽप्यन्यत्र तत्कारणत्वे मानाभावेन च विसम्वादिशुकवाक्याद्बोधसंभवाच्च, ननु मीमांसकै रीश्वरो नाङ्गीक्रियते, वक्तुरिच्छैव च तात्पर्य्यं तथाच तन्मते कथं वैदिकवाक्ये शाब्दबोध इति चेन्न, क्षित्यङ्कुरादिकर्तृत्वेन द्यावेत्याद्यागमेन चेश्वरसिद्धौ "कपिञ्जलानालभेतेत्या" दौ लाघवज्ञानात्मकानुमानसहकारेण तदीयतात्पर्य्यज्ञानेन तत्राऽपिशाब्द बोधाङ्गीकारात्। वस्तुतस्तु शाब्दबोधमात्र म्प्रति तात्पर्यज्ञानं कारणं तथा सति पदजन्यानुभवत्वमेव तत्कार्य्यताऽवच्छेदकमितिलाघवम्, तव तु नानार्थवृत्तिकपदजन्यानुभवत्वे तत्त्वमितिगौरव न्तथाच शाब्दत्वाऽवच्छिन्नम्प्रति तात्पर्यज्ञानं कारणमिति सिद्ध मितिशम् ॥

अङ्कनागाङ्कभूवर्षे भाद्रेकृष्णेऽङ्कगे गुरौ ।
सम्पूर्णत्व मगादेष प्रश्नप्रत्युक्तिविग्रहः ॥ १ ॥
इयम्मुक्तावली व्याख्या मार्कण्डेयेश्वराङ्कगा ।
गङ्गोमागोमतीसख्यं विदधाना विराजताम् ॥ २ ॥
दिनकरखरदीप्ते र्बाल एषोऽसहिष्णु
र्बहुलभय मुपेतो रामरुद्रस्य नाम्नः ॥
रमयतु मृदु रेनं सन्ततं सुप्रकाशः
शशिकिरणसुभासो युक्तमुक्ताकलापः ॥ ३ ॥
भगवद्दत्तजनुषोरेहादेव्यात्मजन्मना
श्रीनारायणदत्तेन प्रकाशो रचितः शुभः ॥ ४ ॥

इति श्री नारायणदत्तशर्म्मत्रिपाठिविरचिते सिद्धान्तमुक्तावली प्रकाशे शब्दखण्डात्मको द्वितीयोभागः सम्पूर्ण इति शिवम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# अथ प्रश्नावली।

## ( सन् १९०० )

(१) तमसोऽतिरिक्तद्रव्यत्वं कथ माशङ्क्य निराकृतम्।
(२) वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ, इति कारिका व्याख्यातव्या।
(३) सुवर्णस्य तैजसत्वे कात्राचो युक्तिः।
(४) शब्दाधिकरणं नवमं द्रव्यात्मक ङ्गगनङ्-कथं सिध्यति।
(५) प्रत्यक्षलक्षणं स्वप्नश्च निरूप्यताम्।
(६) तमसि घटस्याऽग्रावच्छेदेन चक्षुस्संयोगे पृष्ठावच्छेदेनालोकसंयोगे पृथिवीपरमाणुनीले नीलत्वस्य पृथिवीत्वस्य च चाक्षुषप्रत्यक्षं कथ मापाद्य निराकृतम्।

## ( सं० १९०२ )

(१) शक्तिसादृश्ययो रतिरिक्तशङ्का मुपपाद्य निराकुरुत।
(२) द्रव्यादयः पञ्चभावा अनेके समवायिन इति कारिका व्याख्येया।
(३) तृतीया मन्यथासिद्धिं सोदाहरणा म्प्रदर्शयत।
(४) पाषाणस्य पृथिवीत्वं साधयत।
(५) शरीरस्य कर्तृत्व न्निराकुरुत।
(६) इन्द्रियत्वं स्फुट मुपपाद्यताम्।

## ( सं० १९०५ )

(१) द्रव्यत्वजातिसाधनपुरस्सरं तमसो द्रव्यान्तरत्व न्निराकुरुत।
(२) चतुर्थीं मन्यथासिद्धिं सोदाहरणां स्फुटं प्रदर्शय।
(३) पृथिवीत्वजातौ प्रमाण मुपन्यस्य पाषाणस्य पृथिवीत्वं साधयत।

(४) शरीरस्य न चैतन्य मितिकारिका व्याख्येया।
(५) किन्तावदिन्द्रियत्व मिति स्फुटं निरूपयत।
(६) सन्निकर्षषट्कं सोदाहरण मुपपाद्यताम्।

## ( सं० १९०६ )

(१) समवायसिद्धिप्रकारो विस्तरेण वाच्यः।
(२) आकाशात्मनां साधर्म्यं स्फुटं निरूपयत।
(३) जलत्वजातिसिद्धिः कथम्।
(४) कालोपाधिनिरूपणंस्फुटं कुरुत।
(५) इन्द्रियचतन्याङ्गीकृतौ किं दूषणम्।
(६) सन्निकर्षा स्सोदाहरणं परिगणनीयाः।
(७) सामान्यलक्षणाज्ञानलक्षणाप्रत्यासत्योः स्वरूपभेदश्चवाच्यः।

## ( सं० १९०८ )

(१) ग्रन्थारम्भे मङ्गलं किमर्थं क्रियते तत्र च को भेद इति तत्रत्य शङ्कासमाधानपूर्वकं स्पष्टं निरूप्यताम्।
(२) अभावाः कतिविधाः कानि च तेषां लक्षणानि तेषामधिकरणात्मकत्वञ्च कुतो न।
(३) भूतत्वञ्च कुतो न जातिः, तच्च किं स्वरूपं का का शङ्का किञ्च-तत्समाधान मितिवक्तव्यम्।
(४) शरीरत्वञ्च किं तत्स्वरूपे च कुत्राव्याप्तिः कथञ्च तन्निरासस्तस्य च जातित्वमङ्गीकारे किं वाधकम्।
(५) क्षणिकविज्ञानाना मात्मत्वनिरासो विस्तरेणोपपादनीयः।
(६) इन्द्रियत्वं परिष्क्रियतां तत्परिष्कारकुक्षिप्रविष्टसकलपदकृत्यानि च निरूप्यताम्।

## ( सं० १६१३ )

(१) शक्तिशादृश्ययो रतिरिक्तपदार्थत्व माशङ्क्य किं समाहितम् ।
(२) द्रव्यत्वजातौ किं मानम् ।
(३) समवायस्वीकारे का युक्तिः ।
(४) घ्राणस्य पार्थिवत्वे किं मानम् ।
(५) जलत्वजातिः कथंसिद्ध्यति ।
(६) शरीरत्वस्य जातित्वे को दोषः ।
(७) गमनसद्भावे कायुक्तिः ।
(८) आत्मनः क्षणिकविज्ञानरूपत्वे नित्यविज्ञानरूपत्वे वा कोदोषः ।

## ( सं. १६१५ )

(१) द्रव्यत्वजातौ किम्मान मुक्तं विश्वनाथेन ।
(२) तमसोऽतिरिक्तत्व माशङ्क्य किमुक्तम् ।
(३) प्रतिपदव्यावृत्तिप्रदर्शनपूर्वकं जातिलक्षणं व्याख्यायताम् ।
(४) जातिबाधका के कानि च तेषा मुदाहरणानि ।
(५) चाक्षुषस्तैजसत्वे का युक्तिः ।
(६) कालस्यैकत्वे क्षणादिनादिव्यवहारः कथ मुपपद्यते ।
(७) दिशस्सद्भावे किं मानम ।
(८) ज्ञानलक्षणासन्निकर्षानुपगमे को दोषः ।

## ( सं. १६१६ )

(१) नित्यत्वेसत्यनेकसमवेतत्वमितिजातिलक्षणे विभुद्वयसंयोगाभ्युपगते तत्रातिव्याप्तिः कया रीत्या वारणीया ।
(२) विशेषपदार्थस्वीकारे कायुक्तिः किञ्च तल्लक्षणम् ।
(३) किं नाम भूतत्वम् ।

(४) परमाणुसद्भावेऽवयविसद्भावे च किम्मानम्।
(५) किन्तावदिन्द्रियत्वम्, तत्र च गुरुतरसत्यन्तदल म्परित्यज्यात्मान्यत्वे सती त्युक्तौ को दोषः।
(६) वायौ तदीयस्पर्शादौ च सत्ताया श्चाक्षुषप्रत्यक्षवारणाय किम्मुक्तम्
(७) निर्विकल्पकप्रत्यक्षस्वीकारे कायुक्तिः
(८) प्रत्यक्षस्य किं लक्षणम्।

## ( सं० १९१७ )

(१) ईश्वरसाधकानुमानप्रणाली कीदृशी द्यावाभूमी इत्याद्यागमप्रमाणादेव तत्सिद्धौ किमर्थोऽनुमितिप्रकारः ?
(२) असमवायिकारणसामान्यलक्षणं प्रदर्श्यताम्
(३) गुणादिर्निर्गुणाक्रिय इत्यत्राद्यक्षणे घटादौ निर्गुणत्वसत्वादित्यतिव्याप्ति माशङ्क्य किं समाहितम् घटा देर्वानिर्गुणत्वे का युक्तिः।
(४) परमाणुसाधारणजलत्वजातिसद्भावे किम्मानम्।
(५) लौकिकप्रत्यक्षे महत्त्वस्य केन सम्बन्धेन कारणत्वम्।
(६) चाक्षुषप्रत्यक्षे उद्भूतरूपस्य कारणतानुपगमे काक्षतिः।
(७) किन्तावदीश्वरप्रत्यक्षसाधारण म्प्रत्यक्षसामान्यलक्षणम्।

## सं. [ १९१८ ]

(१) अनवस्थाभयात् सामान्यत्वं न जातिरित्युक्तं विश्वनाथेनाऽत्रसामान्यत्वस्य जातित्वसम्भवेऽपि सामान्यत्वस्यैकसमवे त्वाज् जातित्वासम्भवेऽनवस्थायाः कथनं कथं संगच्छते।
(२) विशेषपदार्थस्वीकारे कायुक्तिः।
(३) अभावस्याधिकरणात्मकत्वे को दोषः।
(४) किन्नामशरीरत्वं तस्य जातित्वे चकाक्षतिः।
(५) वायोः प्रत्यक्षं सम्भवति नवा।

(६) शरीरस्य चैतन्ये को दोषः।
(७) आत्मनिरूपणप्रस्तावे सांख्यमतं कयायुक्त्या खण्डितं विश्वनाथेन।
(८) अलौकिकप्रत्यक्षं कतिविधं तदस्वीकारे वा को दोषः॥

## सं. ( १९२० )

(१) समवायसद्भावे किम्मान मुपन्यस्तं विश्वनाथेनेति सविस्तरं निरूप्यताम् अन्यथासिद्धशून्यस्य नियता पूर्ववर्तिता–कारणत्वं भवेदित्यत्र नियतपूर्व वर्तिता निवेशः किमर्थः।
(३) अथाकाशशरीरिणामव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते इत्यत्रयस्य रूपादेरपि क्षणिकतया क्षणिकविशेषगुणवत्त्वं पृथिव्यादावतिव्याप्त मित्याशङ्कायां किमुक्तम्।
(४) रूपद्रवत्त्वप्रत्यक्षयोगि स्यात् प्रथमत्रिक मित्यत्र चाक्षुषप्रत्यक्षविषयत्वस्य परमाणवादावभावादव्याप्तीरूपादौ सत्वा च्चातिव्याप्तिः कथं वारणीया।
(५) परमाणुसाधारणजलत्वजातिसद्भावे किम्मानम्।
(६) किन्तावदिन्द्रियत्वं तस्य जातित्वे वा को दोषः।
(७) आत्मनः क्षणिकविज्ञानरूपत्वे को दोषः।
(८) ज्ञानलक्षणायाः प्रत्यासत्तित्वाभ्युपगमेका क्षतिः॥

## सं. ( १९२१ )

(१) द्रव्यत्वजातौ किम्मानं नहि तत्र प्रत्यक्षं प्रमाणं घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति विश्वनाथः। अत्र द्रव्यत्वजातौ किम्मान मित्याशङ्कायाः कथमवसरः पूर्वंद्रव्यत्वजातेरकथनात्। एवं घटादिषु द्रव्यत्वाग्रहादित्यनुक्त्वा घृतजतुप्रभृतिषु इत्याग्रहवतो विश्वनाथस्य कआशयः।
(२) विशेषस्य किं निष्कृष्टं लक्षणम्।

(३) अन्यत्र नित्यद्रव्येभ्यः आश्रित्वमिहोच्यते, इत्यत्राश्रितत्वं यदि समवायं सम्बन्धेनवृत्ति त्व न्तदा समवायेऽभावादौ चाव्याप्ति र्यदिच वृत्तित्वमात्रं तदा नित्यद्रव्येष्वतिव्याप्तिस्तेषा मपि कालिकेन वृत्तेः।

(४) सुवर्णस्य तैजसत्वे कस्तावदनुमानप्रकारः।

(५) गगनसाधकानुमानप्रणाली कीदृशी।

(६) आत्मनिरूपणप्रस्तावे क्षणिकविज्ञानवादोनित्यविज्ञानवादश्च कया-रीत्यानिराकृतोविश्वनाथेन।

(७) प्रत्यक्षस्य किं लक्षणम्—कतिविध म्प्रत्यक्षम्।

(८) निर्विकल्पकज्ञानानुपममे काक्षतिः॥

## सं [ १९२२ ]

(१) प्रतिपदव्यावृत्तिप्रदर्शनपूर्वकं सामान्यस्य लक्षणं व्याख्यायताम्।

(२) जातिबाधकाः के तेषामुदाहरणान्युपपाद्यताम्।

(३) समवायसाधकानुमानाकारः कीदृशः।

(४) अवयविसद्भावे किम्मानम्।

(५) वायोस्त्वगिन्द्रियेण प्रत्यक्षं भवति नवा।

(६) परमाणुनीले नीलत्वस्य कुतोन चाक्षुषत्वम्।

(७) प्रतिपदव्यावृत्तिप्रदर्शनपूर्वक मिन्द्रियलक्षणं व्याख्यायताम्।

(८) त्वङ्मनःसंयोगस्य ज्ञानसामान्यहेतुत्वे का युक्तिः॥

## सं. ( १९२३ )

(१) शक्तिसादृश्ययो रतिरिक्तपदार्थकत्वेऽनुमानप्रयोगः कीदृशः।

(२) द्रव्यत्वजातिसाधकानुमानप्रणाली कीदृशी।

(३) जाते र्जातिमत्वेऽनवस्थादर्शिता विश्वनाथेन। अत्रजातित्वे जातित्वापादनसंभवेऽपि जातित्वस्यानेकवृत्तित्वाभावादनवस्थायाः कथ मवसरः।

(४) अभावस्याधिकरणात्मकत्वे को दोषः।
(५) परिमाण्डल्यस्य कारणत्वे का क्षतिः। द्व्यणुक परिमाणम्प्रति वा कस्प कारणत्वं यदि संख्याया स्तदा घटादिपरिमाणेऽपि संख्यैव कारण मस्तु परिमाणस्य कारणत्वकल्पनं किमर्थम्।
(६) लौकिकसन्निकर्षाः के तेषामुदाहरणा न्युपाद्यन्ताम्।
(७) आत्मत्वंजातिः कथंसिध्यति।
(८) निर्विकल्पकप्रत्यक्षस्वीकारे का युक्तिः।

## सं. [ १९२४ ]

(१) विशेषसद्भावे किम्मानम्।
(२) आकाशात्मनां किं साधर्म्यंमुपदर्शितं विश्वनाथेन।
(३) परमाणुसमूहस्य घटादिरूपत्वे को दोषः।
(४) किन्नाम मूर्तत्वं तस्य जातित्वे वा को दोषः।
(५) परमाणुसाधरणजलत्वजातिसद्भावे किम्मानम्।
(६) गगनसाधकानुमानप्रणाली कीदृशी।
(७) प्रतिपदव्यावृत्तिप्रदर्शनपूर्वक मिन्द्रियलक्षणं व्याख्यायताम्।
(८) समवायसन्निकर्षसद्भावे का युक्तिः॥

## सं. [ १९२५ ]

(१) ईश्वरसिद्धिप्रकारं साधकबाधकपूर्वकं लिखत।
(२) समवायस्यसम्बन्धत्वे किम्मानन्तन्निरूप्यताम्।
(३) परमाणुसाधारणजलत्वजातिः साध्यताम्।
(४) ननुद्रव्यत्वजातौ किम्मनमित्यस्याः पङ्क्तेः कथ मुत्थानम्। इतः पूर्वंद्रव्यत्वजाते रनभिधानात्।
(५) व्यक्तेरभेदस्तुल्यत्वं संकरोऽथा नवस्थितिः। रूपहानिरसम्बन्धो जाति बाधकसंग्रह इत्यस्यस्पष्टंसोदाहरणं सुपरिष्कृत्तं व्याख्यानं लेख्यम्
(६) पाषाणे गन्धवत्त्वसाधकानुमानप्रकारो दर्शनीयः।

## सं. [ १९२६ ]

(१) पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्—इत्यत्र पारिमाण्डल्यपदेन केषांग्रहणम् । अस्मिन्विषये आचार्याणाङ्कीदृश आशयः

(२) चतुःक्षणावृत्तिजन्यावृत्ति जातिमद्विशेषगुणवत्त्वं केषां साधर्म्यं न्तद्घटकपदानां व्यावृत्तिः का चतुःक्षणावृत्तित्वस्थाने त्रिक्षणावृत्तित्वनिवेशो युज्यते नवा । यदि शब्दस्य चतुःक्षणपर्यन्तस्थायित्वं मतविशेषानुरोधेन स्वीक्रियते तर्हि कीदृशः परिष्कारः ।

(३) सुर्णस्य कुत्रा न्तर्भावः ।

(४) निर्विकल्पकप्रत्यक्षं युक्तिभिः प्रसाध्य तदतीन्द्रियत्वं व्यवस्थाप्यताम् ।

(५) वैशेषिकमते समवायो न प्रत्यक्षः इति पङ्क्तेराशय उद्भाव्यताम् ।

(६) सामान्यलक्षणाज्ञानलक्षणयोः को भेदः ॥

## सं. [ १९२७ ]

(१) नवीनै मंङ्गलस्य समाप्ति फलकत्वं परित्यज्य विघ्नध्वंसफलकत्वं कया युक्त्या प्रतिपादितम् ।

(२) अभावस्याधिकरणात्मकत्वं विहाया·तिरिक्तस्वीकारे युक्तिं प्रदर्शय

(३) गुणादीनां किं साधर्म्यम् ।

(४) जलत्वजातिसिद्धेः प्रकारः प्रदर्शनीयः ।

(५) त्वङ्मनोयोगस्य ज्ञानसामान्यकारणत्वे का वाचो युक्तिः ।

(६) सोदाहरणं सन्निकर्षषट्क मुपपादय ।

## ( सं० १९२९ )

(१) द्रव्यादयः पञ्चभावाअनेके समवायिनः । सत्तावन्त स्त्रय स्त्वाद्या- गुणादि·र्निगुणक्रियः । अस्याःकारिकायाः सिद्धान्तमुक्त ावल्युक्तदिशा व्याख्या क्रियताम् । एतद्व्या ख्यानावासरे सिद्धान्तमुक्तावल्यां

यद्यप्यनेकत्वमभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानांसाधर्म्यम्, तथाचानेकभाववृत्तिपदार्थविभाजकोपाधिमत्व मितिफलितोऽर्थं इत्यभिहितम्। तत्रेयमाशङ्का: अत्रानेकपदघटकैकस्य संख्यारूपैकत्वपरत्वे गुणकर्म्मादीनां तादृशैकत्वानाश्रयतया तेषु चतुर्षु प्रथमलक्षणासद्भावेऽपि द्रव्यमात्रे तल्लक्षणाव्याप्तिः। एकत्वसंख्यायास्तत्रविद्यमानतया नेकत्वस्यासंभवात्। निर्विशेषविषयत्वस्यैकत्व रूपस्य तदर्थत्वे तस्यकेवलान्वयितया निष्कृष्टलक्षणस्यासंभवो दोष स्स्या द्भावमात्रस्य तादृशैकत्वाश्रयतया अनेकभाववृतित्वस्य पदार्थविभाजकोपाधौ द्रव्यत्वादावसत्वात्। अस्या आशङ्कायाः किंसाधनम्।

(२) चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वेसतिपरकीयरूपव्यञ्जकत्वात् प्रदीपवत्। इतिव्याख्यानावसरे किम्मुक्तावल्या मभिहितम्। अत्र-सत्यन्त भागानुपादानपक्षे कीदृशं लक्षणशरीरम्भवेत् तत्रविशेषणान्तरोपादानं चेद्ग्रन्थकर्तुरभिमतं तस्यस्थानं व्यावृत्तिञ्चनिर्दिश

(३) योगजसन्निकर्षस्य कस्मिन्पदार्थेऽन्तर्भाव इति विशिष्यनिरूप्यताम्

(४) परमेश्वरे खल्वात्मत्वजातिरस्तिनवेति संशये मुक्तावल्युक्तदिशा सिद्धान्तस्समर्थनीयः।

(५) ज्ञानलक्षणसन्निकर्षस्य स्वरूपप्रतिपादनपुरस्सरं तत्स्वीकारस्यावश्यकत्व मुक्तावल्युक्तदिशा समर्थनीया।

---

( सं० १९३२ )

# साहित्यमध्यमपरीक्षायाम् ।

## ३ वर्षे ३ पत्रम्

---

सिद्धान्तमुक्तावल्यां शब्दखण्डे प्रश्नाः ।

(१) शाब्दबोधे शक्तिधीः सहकारिणीत्युक्तम्, तत्सहकारित्वं शक्तेः स्वरूपे प्राचीननवीनमतविशेषप्रदर्शनेनोपपादनीयम् । १०

(२) लकाराणां कृतिशक्तिवादिमते कर्त्तुरनभिधानात् कर्तृपदात्तृतीयाप्रसक्तिः कथं वारणीया । १०

(३) शक्तेः जातिव्यक्त्युभयविषयत्वं वादिनिरासेनोपपादनीयम् । १०

(४) प्रभेदप्रदर्शन मुखेन लक्षणायाः स्वरूप मनुगतबीज ञ्चोपपादनीयम् १०

(५) शाब्दबोधकारणानि संक्षेपतो निरूप्य तद्धेतुन्यायेन प्रकरणज्ञानस्यैव शाब्दबोधहेतुत्वे तात्पर्यज्ञानस्य तत्त्वङ्कथमुपपादनीयम् ॥१०॥

---

* श्रीः *

# अशुद्धिपत्रम्

| पृ० सं० | पं० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ७ | ६ | प्रतीत्यभावे– | प्रतीतौ |
| ८ | ६ | च्छिन | च्छिन्न |
| १२ | | परमाण्य | परमाण्व |
| १३ अन्तिम: | | बुद्धेः प्रसङ्गात् | बुद्धेरप्रसङ्गात् |
| १६ | १६ | भावकथना | भावत्वकथना |
| १७ | १९ | मुत्पत्ति | मुत्पत्ति |
| १९ | ९ | कारणत्वयुक्त | कारणत्वमयुक्त |
| ,, | ११ | विशेषणाना | विशेषाणा |
| २७ | २२ | गुणत्वाव्याप्य | गुणत्वव्याप्य |
| २८ | १६ | सभवादिति | संभवादिति |
| ,, | १७ | व्याप्याप | व्याप्त्याप |
| २९ | १५ | पृथ्वीदित्वाद् | पृथ्वीत्वत्वादित्वात् |
| ,, | २० | देनास्ति | देर्नास्ति |
| ३६ | | शङ्कयः | शङ्कया |
| ३९ | ४ | शब्दत्वस्य | आकाशत्वस्य |

४७ पं १६ शब्दोविशेष गुणश्चक्षुर्ग्रहणा योग्यबहिरिन्द्रिय जन्य-प्रत्यक्ष विषयत्वाद् रूपव दित्यनुमानेनात्मविशेषगुणा भावसिद्धेः, ज्ञानादौ व्यभिचारवारणाय हेतौ बहिष्पदम् । इत्येवमनुमान त्रयेण । इत्यस्यस्थाने–

शब्दोविशेषगुणो लौकिकसन्निकर्षेणेन्द्रियग्राह्यत्वेसति तेनैवसन्नि-कर्षेणद्वीन्द्रिय ग्रहणायोग्यत्वेसति गुणत्वव्याप्यजातिमत्त्वा द्रूपवदित्य-नुमानेन तस्य विशेषगुणत्वसिद्धेः, गुरुत्वसंख्ययोर्व्यभिचाराभावाय क्रमशः सत्यन्तद्वयम्, प्रभायां तदभावाय गुणत्वव्याप्येति । ननु तर्ह्यात्मविशेष-

गुण: शब्दःकिमितिचेन्न, शब्दोनात्मविशेषगुणो बहिरिन्द्रिय प्रत्यक्षत्वाद्रूपवदित्यनुमानेन तद्विशेषगुणाभावसिद्धेः, इत्येवमनुमानकदम्बेन

| पृ० सं० | पं० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ४८ | २४ | घटकाङ्गी | घटकत्वाङ्गी |
| ५० | २ | निरुप्यताम् | निरूप्यताम् |
| ५२ | १३–१४ | चैतन्यम् | चेतनम् |
| ५३ | १७ | कतृत्व | कर्तृत्व |
| ५३ | २३ | करणत्वाभय | करणत्वोभय |
| ,, | २४ | कतृत्व | कर्तृत्व |
| ५५ | ८ | संक्रानृत्वे | संक्रान्तत्वे |
| ,, | १४ | प्रमाणभावे | प्रमाणाभावे |
| ५९ | १७ | विपयो खपराभ्यां | विषयोपरागाभ्यां |
| ६२ | १८ | चाक्षुय | चाक्षुष |
| ६३ | ३ | रूपमात्रा | रूपमत्रा |
| ,, | ६ | पत्वाच | पत्वाच |
| ,, | २१ | वायोसत्वाच | वायोस्त्वाच |
| ६८ | ११ | संयोगाश्चय | संयोगाश्रय |
| ६९ | ५ | शब्दत्वप्रक्ष | शब्दत्वप्रत्यक्ष |
| ७० | ७ | कारणात्वेन | कारणत्वेन |
| ७१ | ७ | गनरूपत्वात् | गगनरूपत्वात् |
| ७२ | ३ | दाश्रयप्रतक्ष | दाश्रयप्रत्यक्ष |
| ७३ | ६ | प्रसज्ञिप्रति | प्रसज्ञितमति |
| ७५ | ८ | सामास्यं | सामान्यं |
| ७६ | ४ | सायान्यस्य | सामान्यस्य |

---

❀ श्रीः ❀

# अशुद्धिपत्रम्

| पृ० सं० | पं० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ५ | ३ | पश्चाद्ध | पश्चाद्ध |
| ,, | १० | उपस्थिति | उपस्थिति |
| ,, | २० | च्छाक्तिग्रहो | च्छक्तिग्रहो |
| ,, | २२ | ओषयो | ओपधयो |
| ६ | ४ | तद्वह | तद्ग्रह |
| ,, | ५ | मित्यत्र | मित्यन्यत्र |
| ७ | ४ | समवेत्व | समवेतत्व |
| ,, | १३ | अत्राथभि | अत्रायमभि |
| ,, | १३ | मत्यदं | मत्पदं |
| १२ | ५ | वोधानात् | बोधनात् |
| ,, | ९ | वित्यदौ | वित्यादौ |
| ,, | १३ | उपकुम्भादि | उपकुम्भादौ कुम्भादि । |

